मित्यर्थः । तथा प्रत्यक्षादिप्रमाणाविषयः प्रमाणाानामपि स्वप्रकाशतद्भित्तिवशेन प्रकाशनात् सर्वावभासोल्लासकत्वाच्च । प्रभु प्रभवनशीलं स्वतन्त्रम् । न च उल्लास्यविनाशे अस्य अन्यस्येव मनागपि अन्यथाभाव इति अव्ययमिति । सर्वं तर्क्यते विचार्यते यैरागमैरिति आगमविशेषैः पारमेश्वरैस्तेषामेव सर्वविचारकत्वात्, तानपि अतिक्रान्तं तेषामपि अविषयः, यतो मायान्तैरशुद्धाध्वगैः पाशैः शुद्धाध्वस्थैश्च मन्त्रैर्विवर्जितम् । सर्वं जानात्यभेदेन पश्यति, सर्वं गच्छति अधितिष्ठति व्याप्नोति, तथापि च तेन न मनागपि आरूष्यत इति शान्तं चिदेकरूपम्, तथापि च निष्क्रान्ता उद्भूता आणवादिमला यस्मात्तादृक्, ईदृगपि च तैरसंस्पृष्टत्वाद् निरुपप्लवं निर्विकल्पं सततावभास्वरसर्वाभासकस्वतन्त्रचिदेकरूपम् ॥१९३॥

किञ्च–

**सर्वशक्त्यात्मकं ह्येकं स्वतन्त्रानाथानादिमत् ।**
**सर्वातिशयनिर्मुक्तानादिभववर्जितम् ॥१९४॥**
**सर्वज्ञानपदातीतं शैवं ज्ञानं परं स्मृतम् ।**

'शक्तयोऽस्य जगत्कृत्स्नं.....................'।

इति नीत्या जगदात्मकसर्वशक्तिस्वभावम् । एकमद्वितीयम् । स्वमात्मीयं रूपमेव तन्त्रं पञ्चधाकृत्यकर्मणि उपकरणं यस्य, तत्स्वतन्त्रम् । तथा न विद्यतेऽन्यो नाथो यस्य तदनाथं विश्वेश्वरम् । तथा अनादिमत् सर्वस्यादिभूतम् । सर्वैर्ज्ञानक्रियादिविषयैर्निर्मुक्तं विश्वातिशायिनिरतिशयचिन्मात्ररूपमित्यर्थः । अनादिना अहंप्रथमिकाप्रवृत्तेन भवेन वर्जितमस्पृष्टम् । सर्वेषां बौद्धसांख्यलाकुलादिज्ञानानां यत्पदं स्वं स्वं विश्रान्तिधाम तदप्युल्लङ्घ्य स्थितम् । एवंभूतं यत् परमनुत्तरं शिवज्ञानम्, तद् अनुभवरूपं स्मृतमविच्छिन्नेन पारम्पर्येण प्रतीतमित्यर्थः ।

---

मन्त्रों से भी यह विवर्जित है । सब कुछ जानने वाला सर्वज्ञ है । सबमें व्याप्त है । इसलिये सर्वग है । इनसे अनारूषित है । अतएव शान्त है । चिदेकरूप है । आणवादिमलों से अतीत है । अतएव निर्मल है । अनिर्वचनीय निर्विकल्प होने के कारण यह निरुपप्लव भास्वर तत्त्व है ॥१९३॥

यह शैवज्ञान रूप परमपद सर्वशक्त्यात्मक है । एक स्थान पर कहा गया है कि, 'यह सारा जगत् उसकी शक्तियों का ही उल्लास है' । इस दृष्टि से जगत् रूप सर्व शक्तिस्वभाववान् यह एक ही है अर्थात् अद्वितीय है । स्वकीय स्वात्म स्वरूप ही उसका तन्त्र है । पाँच प्रकार के कृत्यों के काम का तन्त्र उपकरण है । यही उसका स्वतन्त्ररूप है । इसका कोई नाथ अर्थात् स्वामी नहीं है । वरन् यही सबका नाथ है अर्थात् विश्वेश्वर है ।

एवं तत्त्वभूतभावभेदसृष्टीः प्रतिपाद्य, धर्मज्ञानादिनिबद्धलौकिकादिज्ञाननिरूपण-पूर्वं शैवज्ञानमाहात्म्यं च निर्णीय उक्ततत्त्वादिसृष्टिमनुवादभङ्ग्या उपसंहरन् शिव-ज्ञानमाहात्म्यमेव अधिकावापेन दर्शयति–

**एवं सृष्टानि तत्त्वानि ज्ञानानि च वरानने ।।१९५।।**
**तत्त्वैरेतैर्जगत्सर्वं विसृष्टं सचराचरम् ।**

विशेषेण सृष्टं चतुर्दशविधभूतसर्गात्मना प्रपञ्चितम् ।

किञ्च–

**भुवनानि विचित्राणि शतशोऽथ सहस्रशः ।।१९६।।**
**तत्त्वाभ्यन्तरसंस्थानि**

यानि भुवनानि भुवनाध्वनि उक्तानि, तानि अपि तत्त्वैरेव सृष्टानि ।

तथा प्रोक्तज्ञानरूपाणि–

**शास्त्राणि विविधानि च ।**

न केवलं भुवनानि शास्त्राणि च तत्त्वाभ्यन्तराणि, यावत्

**विज्ञानं कुहकं शिल्पं सिद्धिसन्दोहलक्षणम् ।।१९७।।**

---

सभी ज्ञान और क्रियादि विषयों से निर्मुक्त, विश्वातिशायी निरतिशय चिन्मात्ररूप, अनादिभव से वर्जित, सभी बौद्ध सांख्य, लाकुलादि ज्ञानों का जो पद, अर्थात् उनकी विश्रान्ति के धाम हैं, उनको भी अतिक्रान्तकर यह अवस्थित है । इस प्रकार सबसे श्रेष्ठ परम अनुत्तर और अनुत्तम यह पद परम्परा से प्राप्त पद है ।।१९४।।

इस प्रकार तत्त्वभूत भाव भेदमयी सृष्टि का विवरण, धर्मज्ञानादि निबद्ध लौकिक आदि ज्ञानों का निरूपण तथा शैवज्ञान के माहात्म्य का प्रतिपादन करने के बाद उन तत्त्वादि सृष्टि आदि विषयों का उपसंहार करते हुए शिवज्ञान के माहात्म्य को ही अधिक बीजवपन के समान विस्तृत व्यापक रूप में वर्णन कर रहे हैं–

भगवान् कह रहे हैं कि, प्रिये पार्वति ! इस प्रकार चतुर्दशविध भूत सर्ग रूप से प्रपञ्चित तत्त्वों की एवम् अनन्त प्रकार के ज्ञानों की सृष्टि हुई ।।१९५।।

इन तत्त्वों से ही सारा सचराचर जगत् सृष्टि प्रक्रिया में साकार रूप ग्रहण कर सका । इनके साथ अनन्तानन्त भुवनों का अनेकानेक विचित्र भौवन निवेशों का सर्जन सम्भव हुआ । तत्त्वों से ही सृष्ट और तत्त्वों के ही अभ्यन्तर अवस्थित अनन्त अनन्त शास्त्रों का और विद्याओं का सृजन हुआ । इसी के साथ विज्ञान, कुहकमय इन्द्रजाल, शिल्प और सिद्धियों के सन्दोहरूप में अनन्त ऐश्वर्य संसाधनों का निर्माण हुआ ।

**सर्वं तत्त्वेषु बोद्धव्यं**

विविधं मन्त्रमण्डलमुद्राविज्ञानम्, तथा कुहकं विस्मापकं मितहृदयप्रत्यय-कारि इन्द्रजालप्रायम्, शिल्पं चित्रपुस्तपुत्तलिकानृत्तगीतादि, सिद्धीनां वश्या-कर्षणादिरूपाणां सन्दोहं समूहं लक्षयति दर्शयति च यद् ज्ञानम्, तत् सर्वं तत्त्वे-ष्वस्तीति ज्ञेयम् । यतः–

**सर्वतत्त्वेषु दृश्यते ।**

तत्तत्त्वौचित्येन तत्त्वसाक्षात्कारादिभिरुपलभ्यते । न केवलं तत्त्वेषु साधकोप-योगि ज्ञेयमस्ति, यावत्–

**प्रक्रिया शिवदीक्षा च तत्त्वैरेतैर्हि लभ्यते ।।१९८।।**

पूर्वोक्ततत्त्वादिप्रदर्शनरूपा ज्ञानशालिनां साधकानां च उपयोगिनी या प्रक्रिया, तथा तत्तत्तत्त्वगतविचित्रभुवनभोगोचिततत्तद्योनिभेदोपपत्तिनिष्कृतिकर्मादिपाशप्रशमः शिवयोजनिका च एतैरुक्तरूपैस्तत्त्वैर्लभ्यते, न अन्यथा । तदर्थं यथोक्ततत्त्वस्वरूपम-वश्यज्ञेयम् ॥१९८॥

युक्तं च एतद् यतः–

**नास्ति दीक्षासमो मोक्षः**

---

विविध विज्ञान के रूप में मन्त्र, मण्डल और मुद्रादि विज्ञानों का अवतरण हुआ । कुहक इन्द्रजाल को कहते हैं । ये बड़े विस्मापक होते हैं । शिल्प, चित्र, पुस्त, पुत्तलिकादि, नृत्त गीतादि कलाओं को कहते हैं । इसी तरह सिद्धि के रूप में वशीकरण आदि विधियों के विविध आकर्षक रूप अवतरित हुए ।

ये सभी तत्त्वों के विस्तार के अन्तर्गत ही आते हैं । सभी तत्त्वों में उत्पत्ति के सभी लक्षण भी दीख पड़ते हैं । तत्त्वों के औचित्य के अनुसार तत्त्वों के साक्षात्कार में भी उपलब्ध होते हैं ।

यही नहीं कि तत्त्वों में साधकोपयोगिनी ज्ञेयता ही मिली वरन् इसकी उप-योगिनी प्रक्रिया भी प्राप्त हुई । विचित्र तात्त्विक दीक्षाओं का भी श्रीगणेश हुआ । भुवनभोगोचित भेदमयता, कृति, निष्कृति, कर्मों के पाश और उनके प्रशम के उपाय, शिव योजनिका क्रिया आदि इन्हीं तत्त्वों की लाक्षणिकता से लक्षित हो सकी । इनकी जानकारी आज हमारे लिये भी अत्यन्त आवश्यक है ॥१९८॥

यह बात सही भी है । शास्त्र कहता है कि, दीक्षा के समान मोक्ष भी नहीं है क्योंकि, दीक्षा ही विश्व के बन्धनों से मुक्त करती है और साथ ही शैवीधाम में भी पहुँचा देती है । जिन मन्त्रों से दीक्षा दी जाती है, उन मन्त्रों की वीर्यरूपा अर्थात् वाच्यवाचक चमत्कार चैतन्योत्कर्षरूपा मातृका से बढ़ कर कोई विद्या नहीं होती ।

'दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यति' ।

इति हि प्रतिपादितमन्यत्र । दीक्षा च यैर्मन्त्रैः क्रियते, तद्वीर्यरूपा–

**न विद्या मातृका परा ।**

सा हि भगवती अशेषवाच्यवाचकात्मकजगदभेदचमत्कारात्मकशब्दराशि-विमर्शपरमार्था सर्वमन्त्रारणिस्तत्र तत्र आगमेषु निर्दिश्यते । सा च एषा विश्वाव-मर्शनेन परं ज्ञानं प्रयच्छति । तच्च प्रतिपादिताध्वप्रक्रियामयमेवेत्याह–

**न प्रक्रियापरं ज्ञानं**

प्रक्रियातः परमन्यज्ज्ञानं परितुच्छमेव । ज्ञानं ज्ञेयस्य ज्ञापकमिति पूर्वनिरूपितनीत्या ज्ञानेन लक्षणीयो यो लक्ष्यभूतपरतत्त्वैकात्मा योगस्ततोऽन्यो मितयोगो हेय एवेत्याह–

**नास्ति योगस्त्वलक्ष्यकः ।।१९९।।**

अविद्यमानं परं लक्ष्यं विश्रान्तिधाम यस्य तादृशो योगो नास्ति । विद्यमानोऽपि मितयोग इह अनुत्तरचर्चायामयोग एवेति योजनिकोक्तः परयोग एव इह योगः ।।१९९।।

---

भगवती मातृका के द्वारा अद्वयाद्वैत चमत्कारमयी शब्दराशि के संविद्विमर्श रश्मियों से ही समस्त मन्त्रों की उत्पत्ति निष्पत्ति होती है और मन्त्रों में अरणि मन्थन द्वारा निष्पन्न अग्निनारायण की अर्थमयी सार्थकता उच्छलित होती रहती है । यह मातृका विद्या ही विश्वात्मक प्रत्यवमर्श के द्वारा परमोपादेय ज्ञान का ज्ञापन करती रहती है । सारी अध्वप्रक्रिया की विज्ञानवादिता इसी पर निर्भर करती है ।

भगवान् स्वयं कहते हैं कि, प्रक्रिया से बढ़कर कोई ज्ञान हो ही नहीं सकता । ज्ञान ज्ञेय का ही ज्ञापक होता है । इस ज्ञान से लक्षणीय जो लक्ष्यभूत परतत्त्वैक्य रूप योग इस योग के समान भी कोई योग नहीं होता । इसीलिये कहते हैं कि, योग कभी अलक्ष्यक नहीं होता । अर्थात् ऐसा योग नहीं होता, जिससे परम विश्रान्तिधाम परमेश्वर लक्षित नहीं हो । इस कथन से यह सिद्ध हो जाता है कि, ज्ञान योग परमात्मा को लक्षित करने वाला परम सर्वोत्तम साधन है ।

अन्य सभी योग मितयोग कहलाते हैं । ये सभी अनुत्तर शास्त्रचर्या के सन्दर्भ में अयोग मात्र ही हैं । वस्तुतः परयोग वही है, जो योजनिका क्रिया द्वारा परमेश्वर महाभाव से जोड़ दे ।।१९९।।

एवं परपुरुषार्थप्रापकदीक्षातदुपयोगिमातृकाप्रक्रियाज्ञानलक्ष्यकयोगस्वरूपमेतत्सर्वमेव सातिशयं वस्तु पारमेश्वर एव शासने उपदिश्यत इति तदेव सर्वशास्त्रोत्तममिति निरूपयति–

**तत्सर्वं कथितं देवि शिवज्ञानमहोदधौ ।**

शिवज्ञानमेव अगाधत्वात् समग्रज्ञाननदीभेदविश्रान्तिधामत्वात् समस्तसम्पत्समवाप्तिहेतुत्वाच्च महोदधिः ।

प्रकृतमुपसंहरन्नन्यदवतारयति–

**एवं सृष्टिः समाख्याता स्थितिः संहार उच्यते ।।२००।।**

संहारश्चेत्यर्थः । तत्र स्थितिर्नियतिकालावस्थानात्मा, तत्प्रान्ते च संहारस्तथेति ।।२००।।

यतः प्रभृति प्रवृत्तो यादृशश्च यस्य स्थाप्यस्य संहार्यस्य च कालः, तत्सर्वमादेष्टुमाह–

**मानुषाक्षिनिमेषस्य अष्टमांशः क्षणः स्मृतः ।**
**क्षणद्वयं तुटिर्ज्ञेया तद्द्वयं तु लवः स्मृतः ।।२०१।।**

---

इस तरह परम पुरुषार्थ प्रद दीक्षा है, यह सिद्ध हो जाता है । दीक्षा के लिये परम उपयोगी मातृका शक्ति होती है । मातृका में प्रक्रियापरक ज्ञान की उपलब्धि होती है । इस तरह के ज्ञान को लक्ष्यक योग के द्वारा पारमेश्वर साक्षात्कार होता है । इस तरह की शिक्षा इसी शास्त्र में दी जाती है । इसलिये यह सर्वोत्तम शास्त्र माना जाता है । भगवान् कहते हैं कि,

यह शास्त्र शिवज्ञान का लहराता महासागर है । देवि ! मैंने इस शास्त्र समुद्र के समस्त रत्नों के विषय में तुम्हें जानकारी दी । यह अगाध शास्त्र है । सारी ज्ञान की नदियाँ इसमें आ मिलती है । स्रोतस्विनियों का यह विश्रान्ति धाम है । समस्त सम्पत् समवाप्ति का यह हेतु है । इसीलिये इसे महासागर कहते हैं ।

भगवान् कहते हैं कि, देवि ! सृष्टि स्वरूप और इन सन्दर्भों का मैंने तुम्हारे सामने व्याख्यान किया है । यहाँ से मैं तुम्हें स्थिति और संहार के विषय में बताऊँगा । इसे ध्यान पूर्वक सुनो । नियति और काल में अवस्थान ही स्थिति मानी जाती है । साथ ही स्थिति का संहार में ही अन्त होता है ।।२००।।

यह जहाँ से प्रवृत्त हुआ है, जैसा है, प्रारम्भ के बाद स्थिति योग्य और संहारयोग्य क्षणों में काल-स्वरूप क्या हो सकता है ? उन सबके विषय में बताने के लिये ये भगवान् की उक्तियाँ ध्यान देने योग्य हैं ।

**लवद्वयं निमेषस्तु ज्ञातव्यो गणितक्रमात् ।**
**दश पञ्च निमेषाश्च काष्ठा चैव प्रकीर्तिता ।।२०२।।**
**त्रिंशत्काष्ठाः कला ज्ञेया मुहूर्तस्त्रिंशदेव ताः ।**
**मुहूर्तस्तु पुनस्त्रिंशदहोरात्रस्तु मानुषः ।।२०३।।**

शास्त्रव्युत्पिपादयिषितानां मनुष्याणां स्वानुभवसिद्धौ योऽक्ष्णो निमेषः पक्ष्मसंकोचस्तदीयो योऽष्टमांशः अत्यन्तमणीयान् कालावयवः अक्षिनिमेषकालप्रतीत्यैव कल्प्यमानः, स क्षणः । लव इति यः प्राणीयस्तुटिकालः । यदुक्तं प्राक्–

'तुटयः षोडश प्राणे पूर्वं हि कथिता मया ।
बाह्येनैव तु कालेन ते लवाः परिकीर्तिताः' ॥ इति । (७।२७)

बाह्यलवद्वयं निमेष इति क्षणाष्टकरूपः । मुहूर्त इति द्विघटिकारूपः ॥२०३॥

किञ्च–

**अहोरात्रशतैश्चैव त्रिभिः षष्ट्यधिकैः प्रिये ।**
**संवत्सरस्तु विज्ञेयो मानुषः कमलेक्षणे ।।२०४।।**

---

शास्त्रों की व्युत्पत्ति पूर्वक उनके प्रतिपादन के अभिलाष के साथ सतत संलग्न साधकों विद्वानों और व्याख्याकारों के अनुभव से सिद्ध है कि, उनके नेत्रों के निमेष में और उन्मेष में मिलाकर कितना समय लगता है । उनके पक्ष्मसंकोच में कितना समय लगता है । पलक के गिरने, निचली सतह में सटकर पुनः उठ जाने में जितना समय लग जाता है, उसके आठवें भाग के समान अणीयान् क्षणांश के कालावयव को 'क्षण' कहते हैं । दो क्षणों के बराबर कालांश को 'तुटि' कहते हैं । दो तुटियों के योगांश को 'लव' कहते हैं । दो लवों का एक 'निमेष' होता है । पञ्चदश निमेष की एक 'काष्ठा' होती है । ३० काष्ठाओं की एक 'कला' होती है । ३० कलाओं का एक मुहूर्त्त होता है और ३० मूहूर्त्तों का एक मानव अहोरात्र माना जाता है ।

इसी ग्रन्थ के पटल ७।२७ में यह कहा गया है कि, प्राण में १६ तुटियाँ होती हैं । सोलह साँस लेने में और सोलह साँस के छोड़ने में । उसके साथ ७२ अंगुल के प्राणापानवाह में प्राणापान की २½-२½ अंगुल की ये तुटियाँ होती हैं । यह बाह्यकाल माना जाता है । इसी मान के अनुसार दो लवों का एक निमेष होता है । यह आठ क्षणों के बराबर का है । इसी तरह दो घड़ियों का एक मुहूर्त्त माना जाता है ॥२०१-२०३॥

और आगे भगवान् इसी विषय को आगे बढ़ाते हुए कह रहे हैं कि, प्रिये पार्वति ! तीन सौ साठ अहोरात्रों का एक संवत्सर होता है । सौ संवत्सरों की ही

**संवत्सरशतं पूर्णमायुर्ज्ञेयं तु मानुषम् ।**

विंशत्यधिकं हि शतं परमायुरिति प्रसिद्धम् ।

यदुक्तं षष्ट्यधिकाहोरात्रशतत्रयेण वत्सर इति, तदेव पक्षमासादिविभागपूर्वं स्फुटयति–

**दश पञ्च त्वहोरात्राः पक्षस्तु परिकीर्तितः ।।२०५।।**
**पक्षद्वयेन मासस्तु ऋतुर्द्विगुण एव सः ।**
**ऋतुद्वयेन कालः स्यादयनं च त्रिभिस्त्रिभिः ।।२०६।।**
**ताभ्यां द्वाभ्यां वरारोहे वर्षं तु परिगीयते ।**

कालश्चतुर्मासंसंज्ञः । अयनमुत्तरायणं दक्षिणायनं च ।

इत्थमयनद्वयात्मको यो मनुष्याणां वत्सरः, स एव पित्र्योऽहोरात्र इत्याह–

**दक्षिणं चायनं रात्रिरुत्तरं चायनं दिनम् ।।२०७।।**
**पितृणां तदहोरात्रमनेनाब्दस्तु पूर्ववत् ।**
**एवं दैवस्त्वहोरात्रस्तत्राप्यब्दादि पूर्ववत् ।।२०८।।**

आदिशब्दात्पक्षमासादि । इत्थं पितृणां देवानां च तुल्या अहोरात्रकलनेति पुराणपुस्तकेषु दृश्यते, अद्यतनैस्तु 'ऋतुर्द्विगुण एव सः' इत्यतोऽनन्तरम्–

---

मनुष्य की आयु होती है । बीस वर्ष यदि मनुष्य और जी जाय तो उसकी यह परमायु मानी जाती है । यह लोक प्रसिद्ध कथन है । इस उक्त काल-खण्ड के ही अन्तराल में पन्द्रह अहोरात्र का एक पक्ष होता है ॥२०४-२०५॥

दो पक्ष का एक मास, दो मासों का एक ऋतु, दो ऋतुओं के चार मास, तीन तीन ऋतुओं के एक एक अयन होते हैं । दो अयनों का एक वर्ष होता है । यही पितरों एक अहोरात्र अर्थात् उत्तर अयन दिन और दूसरा दक्षिण अयन रात, यही अहोरात्र का रूप है ॥२०६-२०७॥

उत्तरायण और दक्षिणायन रूप दिन रात्रि का एक पितृदिन अर्थात् एक अहोरात्र होता है । यही कलना देवों की कालकलना भी है अर्थात् पितरों और देवों के अहोरात्र बराबर होते हैं । इन्हीं अहोरात्रों की कलना के आधार पर मास और वर्ष आदि की कलना की जाती है । श्रीमद्भागवत पुराण भी यही कहता है कि, पक्षसमुच्चयोमासः पितृणां तदहर्निशम् । (३।११।११)

आचार्य क्षेमराज यहाँ उनके समय के तत्कालीन कुछ विद्वानों द्वारा बदले गये पाठ भेद की बात कर रहे हैं । इन विद्वानों के अनुसार श्लोक २०६ में 'ऋतुर्द्विगुण एव सः' इस पाठ के बाद पाठ विपर्यय पर यह कहा है कि,

'कृष्णपक्षस्त्वहश्चैव शुक्लस्तु रजनी भवेत् ।
पितृणां सोऽप्यहोरात्रस्त्वनेनाब्दस्तु पूर्ववत्' ॥

इति विपर्यास्य पठित्वा मानुष्यो मासः पित्र्योऽहोरात्र इति व्याख्यातम्, तेषां च सांवत्सरिकी पितृदिनव्यवस्था लौकिक्यपि स्थितिः प्रसृता ।

तदेवं मानुषषष्ट्यधिकत्रिशताब्दपरिमाणो यो दिव्यो वत्सरस्तमाश्रित्य–

**द्वादशाब्दसहस्राणि विज्ञेयं तु चतुर्युगम् ।**

द्वादशाब्दसहस्राणि विज्ञेयं चतुर्युगम् । अत्र च अयं विभागः–

**चतुर्भिस्तु कृतं देवि सहस्रैस्तु यथाक्रमम् ।।२०९।।**

**त्रेता ज्ञेया त्रिभिर्देवि द्वाभ्यां वै द्वापरः स्मृतः ।**
**सहस्रेणैव वर्षाणां विज्ञेयस्तु कलिः प्रिये ।।२१०।।**

एवं दश वर्षाणां सहस्राणि ॥२१०॥

यत्तु अवशिष्टं सहस्रद्वयम्, ततः–

**सन्ध्याद्वयस्य मानं तु कथयामि युगे युगे ।**

आद्यन्तगतस्य । तत्र–

**शतानि चत्वारि कृते त्वादिरन्तश्च कीर्त्यते ।।२११।।**

**त्रेते शतत्रयं ज्ञेयं द्वापरे तु शतद्वयम् ।**
**कलौ चापि शतं ज्ञेयं सन्ध्यामानमिदं स्मृतम् ।।२१२।।**

---

कृष्णपक्ष ही दिन होता है और शुक्लपक्ष ही रात होती है । यही पितरों का अहोरात्र है और इसी गणना के अनुसार वर्ष का गणित भी होता है । इस गणना के अनुसार एक मानुष्य मास पितरों का एक अहोरात्र सिद्ध होता है । इस तरह मनुष्यों के ३६० महीनों का एक दिव्य या पितर वर्ष सिद्ध होता है । इसी कलना क्रम के अनुसार १५ दिव्य अहोरात्रों का एक पक्ष होता है । इस गणना के अनुसार ही दिव्य और पित्र्य व्यवस्था का आकलन करना चाहिये ॥२०८॥

मनुष्य के ३६० वर्षों का एक दिव्यवत्सर होता है । इसी के आधार पर यह सिद्ध हो जाता है कि, दिव्य बारह हजार वर्षों का एक चतुर्युग होता है । इसमें ४ हजार वर्षों का सत्ययुग, तीन हजार वर्षों का त्रेता, दो हजार वर्षों का द्वापर और एक हजार वर्ष का ही कलियुग होता है । इस तरह दश हजार दिव्य वर्ष में चारों युगों की काल सीमा पूरी हो जाती है ॥२०९-२१०॥

इसके अनुसार अभी दो हजार बच रहे हैं । इसमें युगसन्धियाँ व्यतीत होती हैं । १–कलि और कृत इन दोनों की सन्धि ५०० वर्ष की, २–कृत और त्रेता की युगसन्धि ७०० वर्ष, ३–त्रेता द्वापर की युगसन्धि ५०० वर्ष तथा

एवं च कलेरन्ते शतं कृतस्यादौ चत्वारि शतानि इति कलिकृतयुगयोः सन्ध्या पञ्च शतानि, कृतत्रेतयोः सन्ध्या सप्त शतानि, त्रेताद्वापरयोः पञ्च शतानि, द्वापरकलियुगयोः त्रीणि शतानीति गणयित्वा सहस्त्रद्वयम् । एतत् प्रागुक्तेन सहस्त्र-दशकेन सह द्वादशसहस्त्रं चतुर्युगम् । यदा तु–

'सन्धिसन्ध्यंशमानं तु कथयामि..........'।

इति पाठः, तदा प्रोक्तोभयमेलनात्ससन्धिमानमेकैकशतं तु सन्ध्यंशमानं ज्ञेयम् ॥२१२॥

एतदेव च–

**लौकिकेन तु मानेन पुनश्च कथयामि ते ।**

यावत्संख्याकं भवति ।

**त्रिचत्वारिंशल्लक्षाणि सहस्त्राणि च विंशतिः ।।२१३।।**
**लौकिकेन तु मानेन त्वियं संख्या चतुर्युगे ।**

वर्षाणामिति शेषः । विभागेनापि–

**एकैकस्य पुनर्देवि युगस्य कथयामि ते ।।२१४।।**

लौकिकवर्षसंखम् ॥२१४॥

**दश सप्त च लक्षाणि सहस्त्राण्यष्टविंशतिः ।**
**कृतस्यैतद्भवेन्मानं त्रेतायाः कथयामि ते ।।२१५।।**

आद्यन्तगतचतुःशतसन्ध्यंशयुक्तस्य, न तु केवलस्य । एवमुत्तरत्र ।

**षण्णवतिः सहस्त्राणि लक्षाणि द्वादशैव तु ।**
**त्रेतायुगस्य मानं तु द्वापरस्य निबोध मे ।।२१६।।**
**चतुःषष्टिः सहस्त्राणि ह्यष्टौ लक्षाणि सुव्रते ।**
**द्वापरस्य तु मानं च कलेस्तु कथयामि ते ।।२१७।।**

---

४–द्वापर और कलि की युगसन्धि ३०० वर्ष की होती है । इस तरह बची हुई दो हजार वर्ष की अवधि पूरी हो जाती है और १२ हजार वर्ष का चतुर्युग पूरा हो जाता है । इसी के अन्तर्गत सन्ध्यंश माना भी जाता है । यह सौ सौ वर्ष के बराबर होता है ॥२११-२१२॥

इसे लौकिक मान के अनुसार भी आकलित करना चाहिये । इस गणित के अनुसार सन्ध्यांश और सन्ध्या के मानों को मिलाकर १–कृत युग सत्रह लाख अट्ठारह हजार वर्ष का होता है । २–त्रेता युग का सन्ध्या और सन्ध्यांश सहित मान बारह लाख छानबे हजार वर्ष का होता है । ३–द्वापर युग का सन्ध्या और सन्ध्यांश सहित मान आठ लाख चौसठ हजार वर्ष का होता है ।

**द्वात्रिंशत्तु सहस्राणि लक्षाणां च चतुष्टयम् ।**
**एतन्मानं कलेः प्रोक्तं समासात्तव सुव्रते ।।२१८।।**

तदित्थम्-

**वर्षैस्तु मानवैर्देवि मानमेतद्युगे युगे ।**

एवमुक्तदिव्यलौकिकाब्दमानानुसारेण-

**चतुर्युगैकसप्तत्या भवेन्मन्वन्तरं पुनः ।।२१९।।**

एतच्च अस्य-

**सन्ध्यामानविहीनं तु युगैर्मलं प्रकीर्तितम् ।**
**एतद्दिव्येन मानेन मानं मन्वन्तरे स्मृतम् ।।२२०।।**

चतुर्युगशतानि द्वादशाब्दसहस्राण्येकसप्तत्या गणयेत् ॥२२०॥

एतदेव च मानम्-

**वर्षमानैः पुनश्चैव लौकिकैः कथयामि ते ।**
**सप्तषष्टिस्तु लक्षाणि त्रिंशत्कोट्यो वरानने ।।२२१।।**
**सहस्रविंशतिर्ज्ञेयं मानं मन्वन्तरे प्रिये ।**

सषष्टिशतत्रयकलनया मन्वन्तरकाल एव च ऐन्द्रस्थितिकाल: ।

एवमेवंविधैः-

**चतुर्दशभिर्देवेशि कल्पो मन्वन्तरे भवेत् ।।२२२।।**

---

४-कलियुग का सन्ध्या सन्ध्यांश सहित मान चार लाख बत्तिस हजार वर्ष का होता है ॥२१३-२१८॥

भगवान् कह रहे हैं मानव काल गणना के अनुसार युग युग का यही मान है । इसी मान के ७१ चतुर्युगों का एक मन्वन्तर होता है ॥२१९॥

सन्ध्यामान से विहीन युगों के कारण 'मल' का मान होता है । दिव्यमान से होने वाले मान की कलना मन्वन्तर में भी की जाती है । ७१ चतुर्युगी में १२ हजार वर्ष की गणना दिव्यमान में करनी चाहिये ॥२२०॥

मन्वन्तर का लौकिक मान तीस करोड़ सड़सठ लाख बीस हजार वर्षों के बराबर होता है । पूर्वोक्त ३६० वर्षों की (२०४) गणना के अनुसार मन्वन्तर का समय ही इन्द्र की स्थिति का समय माना जाता है । इस प्रकार १४ चौदह मन्वन्तरों का एक कल्प माना जाता है ॥२२१-२२२॥

मन्वन्तरसन्ध्यामानमाह–

**मन्वन्तरे व्यतिक्रान्ते चान्यस्मिन्पुनरागते ।**

**पञ्च वर्षसहस्राणि मध्ये सन्ध्या भवेत्सदा ।।२२३।।**

दिव्यानीत्यर्थात् ॥२२३॥

अयं तु विशेषः, यत्–

**आदौ सहस्रं सर्वेषामन्ते चापि पुनस्तथा ।**

ब्रह्मदिनगतमन्वन्तरापेक्षया आदावन्ते चेति प्रथममन्वन्तरस्यादौ चरममन्वन्तरस्यान्ते सहस्रमेकमधिकमिति ।

तदित्थं ससन्ध्याकालचतुर्दशमन्वन्तरकालः–

**कल्पो ब्रह्मदिनं प्रोक्तं चतुर्युगसहस्रकम् ।।२२४।।**

कल्पते विश्वमस्मिन्निति कल्पः एकसप्तत्या चतुर्युगैश्च मन्वन्तरगुणितैः षड्भिरूनं चतुर्युगसहस्रं भवति । मन्वन्तरेषु सन्ध्याकालोऽप्युक्तनीत्या द्वासप्ततिसहस्र इति तदीयचतुर्युगषट्केन सहस्रमानमेतदुक्तम् ॥२२४॥

---

एक मन्वन्तर के और पुनः नये के आगमन पाँच हजार वर्षों की एक सन्ध्या होती है ॥२२३॥

ब्रह्मा के दिन के अनुसार मन्वन्तर की अपेक्षा आदि और अन्त की दृष्टि से प्रथम मन्वन्तर के आदि में और अन्तिम मन्वन्तर के अन्त में एक एक हजार वर्षों की गणना के अनुसार अधिक वर्षों की कलना करनी चाहिये ।

इस तरह सन्ध्या काल को लेकर १४ मन्वन्तरों का समय एक कल्प और ब्रह्मा का ब्राह्मदिन होते हैं । इसमें १००० एक हजार चतुर्युगी की सीमा निर्धारित है[१] । तीस करोड़ सड़सठ लाख बीस हजार मन्वन्तर के मान के आधार पर कल्प आदि की सीमा काम करती है ।

एकहत्तर चतुर्युगी को मन्वन्तर काल से गुणाकर ६ से भाग देने पर एक हजार चतुर्युगी होती है । मन्वन्तरों में युग सन्ध्या सन्ध्यंश भाग युक्त रहता है । यह संख्या बारह हजार वर्ष की होती है । मन्वन्तरीय छ चतुर्युगी से सहस्र युक्त मान सही बैठता है ॥२२४॥

---

१. श्रीमद्भा० ३।११।२२

एतच्च

**वर्षमानेन दिव्येन पुनश्च कथयामि ते ।**

संख्यातमिति शेषः । तदाह–

**कोटिरेका तु वर्षाणां लक्षाणां चैव विंशतिः ।।२२५।।**

**दिव्येनैव तु मानेन ब्रह्मणस्तु दिनं भवेत् ।**

द्वादश सहस्राणि सहस्रगुणितानि एवमेव भवन्ति ।

ईदृशस्य अस्य ब्राह्मदिनस्य–

**षण्णवत्या सहस्रैस्तु सन्ध्याकालः प्रकीर्तितः ।।२२६।।**

अष्टौ चतुर्युगानि षण्णवत्या वर्षसहस्रैर्भवन्ति । तत्र प्रातःसन्ध्यायां दिनशतानि चत्वारि चतुर्युगानि, सायंसन्ध्यायां चत्वारीति विभागः । निशाद्यन्तगतानि अप्येवमेवेत्यष्टयुगः प्रातः सायं च सन्ध्याकालः ।।२२६।।

एतच्च–

**लौकिकेन तु मानेन अधुना कथयामि ते ।**

सङ्ख्यातमिति शेषः । तदाह–

**वर्षवृन्दानि चत्वारि त्वर्बुदत्रयमेव च ।।२२७।।**

**कोटिद्वयं च देवेशि दिनं पैतामहं स्मृतम् ।**

**सन्ध्या कोटित्रयं चैव पञ्च लक्षाणि कीर्तिता ।।२२८।।**

**चत्वारिंशत्तथा षष्टिः सहस्राणि तथैव च ।**

षण्णवतिसहस्राणि सषष्टिशतत्रयकलितानि एवमेव भवन्ति । अतश्च यत् श्रीभुल्लकः–

'सन्ध्याकोटित्रयं लक्षाणि चतुःसप्ततिरेव च' ।

इत्यादि पठितवान्, तदुपेक्ष्यम् । यथा च अयम्–

---

वर्षमान के अनुसार एक करोड़ बीस लाख दिव्य वर्षों का ब्रह्मा का एक दिन होता है । १२ हजार वर्ष का एक हजार दिव्यवर्षों का गुणनफल भी इतना ही होता है ।।२२५।।

ऐसे ब्रह्मा के एक दिन में ६९हत्तर हजार वर्ष की युगसन्धि होती है । इसमें ८ चतुर्युगी का समावेश हो जाता है । इसमें प्रातः संध्या चार युग चार सौ दिन की होती है और सायं संध्या में चार चतुर्युगी होती हैं । अर्थात् सायं प्रातः मिलकर ८ चतुर्युगी की गणना का कालखण्ड मान्य है ।।२२६।।

इसी लौकिक मान से चार वृन्द, तीन अर्बुद, दो करोड़ वर्षों का एक ब्राह्मदिन होता है । तीन करोड़ ४५ लाख वर्ष की सन्ध्या में ६० हजार वर्ष और

**पश्चिमः सन्धिरेवं हि**

सन्धिः सन्ध्याकालः । तथा–

**पूर्वसन्ध्यापि तत्समा ।।२२९।।**

तदित्थं ब्रह्मदिनावधिका–

**नरकैः सह सप्तानां पातालानां तथा प्रिये ।**
**लोकानां चैव सप्तानां स्थितिरेषा प्रकीर्तिता ।।२३०।।**

लोकानां तन्निवासस्थानानां भूरादीनाम् । तथा एषामेव–

**संहारं च पुनर्देवि शृणुष्व कथयामि ते ।**
**ब्रह्मणः स्वदिनान्ते वै कल्पः संहार उच्यते ।।२३१।।**

स्वदिनान्त इति तन्निशायाम् । कल्प इति कल्प्यते छिद्यते अस्मिन् विश्वमिति कृत्वा । संहार इति संहारकालः ।।२३१।।

तत्र–

**दिनेनैकेन ब्राह्मेण इन्द्राश्चैव चतुर्दश ।**
**राज्यं कृत्वा क्रमाद्यान्ति मन्वन्तरव्यवस्थया ।।२३२।।**

प्रतिमन्वन्तरं राज्यं कृत्वा एकैक इन्द्रः स्वकर्मौचित्येन गच्छति ।।२३२।।

**ततः संहरते विश्वं सप्तलोकान्तगोचरम् ।**
**सुप्ते पितामहे देवि ऊर्ध्वं कालाग्निरीक्षते ।।२३३।।**

---

होते हैं । भुल्लक तीन करोड़ चौहत्तर लाख की मानते हैं जो ठीक नहीं । पूर्व और पश्चिम सन्ध्यायें भी बराबर की ही होती हैं ।।२२९।।

यह काल गणना नरक, पाताल और लोकों के काल की गणना समान ही मानी जाती है ।।२३०।।

ब्रह्मा के दिन की तरह ब्रह्मा की रात भी उतनी बड़ी ही लम्बी अवधि की होती है । इस तरह ब्रह्मा के दिन के अन्त में विश्व का संहार हो जाता है ।।२३१।।

एक ब्राह्म दिन में १४ इन्द्र अपने राज्यकाल को समाप्त कर प्रति मन्वन्तर कालखण्ड व्यतीत कर अपने कर्मों के औचित्य के अनुसार निवृत्त हो जाते हैं ।।२३२।।

चौदहों इन्द्रों के अपने कर्मानुसार चले जाने पर ब्रह्मा को अब नींद आने लगती है । उस समय ब्रह्मा विश्व को स्वात्म में ही समाहित कर लेते हैं ।

तत इति चतुर्दशेन्द्रान्ते। पशुवन्निद्रायमाणेन ब्रह्मणा जनितविस्मयो यावत्कालाग्निरूर्ध्वमीक्षते, तावत्सप्तलोकान्तगोचरं विषयजातं संहरति ॥२३३॥

अथ निरीक्षणसमये–

**तस्य वै दक्षिणं वक्त्रं महाज्वालां विनिक्षिपेत् ।**

अतश्च–

**तस्माद्वक्त्रान्महाज्वाला लक्षयोजनविस्तृता ।।२३४।।**
**ऊर्ध्वं प्रयाति सा दीप्ता तीव्रवेगा सुदुःसहा ।**

अत्र च अवसरे सप्तसु–

**लोकेषु ये स्थिता लोका ये च पातालवासिनः ।।२३५।।**
**सुखदुःखोभये क्षीणे मोहं भूयिष्ठमागते ।**
**सत्तामात्रास्तु ते सर्वे भवन्ति ब्रह्मविष्टपे ।।२३६।।**

ये चेति चशब्दान्नरकादिक्षेत्रगताः । ब्रह्मविष्टपे सत्यलोकोर्ध्ववर्तिनि ब्रह्मभुवने ॥२३६॥

कियदवधिका एषां मूढतेत्याह–

**यावन्नोदयनं भूयः सुखदुःखादिकर्मणाम् ।**
**तावत्तिष्ठन्ति ते मूढा यावद्ब्रह्मा न बुध्यते ।।२३७।।**

---

सारे विश्व की विस्मय जनक स्थिति हो जाती है । सप्तलोक का यह अन्त ब्रह्मा की सुषुप्ति के कारण होता है । सबसे भयङ्कर स्थिति तब उत्पन्न होती है, जब इधर ब्रह्मा सोते हैं और उधर कालाग्नि ऊपर अपनी क्रूर दृष्टि का निक्षेप करता है ॥२३३॥

उसके दाहिने मुख से महाज्वाला जाल लाखों योजन ऊपर जलता हुआ ऊपर की ओर चल पड़ता है ॥२३४॥

अत्यन्त तीव्र वेग से सुदुःसह दीप्तदाह के उद्वेग से ऊपर उठने वाली वह आग सभी लोकों में दिग्दाह पैदा कर कोहराम मचा देती है । आकाश और पाताल की प्रलय लीला में सब कुछ संहृत हो जाता है ॥२३५॥

सुख और दुःख दोनों दग्ध ! महामोह की मुमूर्षा भी मूर्च्छित हो जाती है । उस समय सत्तामात्र में सारे जीव ब्रह्म भुवन में, जो सत्यलोक से ऊपर व्यवस्थित है, उसमें अवस्थित हो जाते हैं ॥२३६॥

ये लोक ब्रह्मा के उठने तक वहीं रहने के लिये विवश होते हैं । उनमें सुखदुःखादि के भोग के अनुसार भाव जब तक उदय नहीं होते तब तक ये मूढ

सुखदुःखयोरादिशब्दाद् जन्मायुषोर्हेतुभूतानि कर्माणि, तेषाम्। उदयो विपाकः ॥२३७॥

ये तु–

**रुद्रलोकाधिपतयः पातालपतयश्च ये ।**

**कूष्माण्डहाटकाद्यास्तु ते तिष्ठन्त्यतिनिर्मलाः ॥२३८॥**

न तु मनागपि म्लायन्ति ॥२३८॥

किन्तु–

**निर्व्यापारास्तु ते तावद्यावत्सृष्टिः पुनर्भवेत् ।**

निवृत्तानुग्रहादिव्यापाराः । अथ–

**शून्यभूतेषु लोकेषु ज्वाला दहति दुर्धरा ॥२३९॥**

**सा दहेन्नरकान्देवि पातालानि समन्ततः ।**

**त्रींल्लोकांश्चैव दहति भूर्भुवःस्वःपदान्तिकान् ॥२४०॥**

शून्यभूतेषु लोकेष्विति तन्निमित्तम्, नरकेभ्यः प्रभृति स्वर्लोकान्तं दहति ॥२४०॥

ये तु अन्ये, ते–

**धूमेन च त्रयो लोका विनश्यन्ति वरानने ।**

**महोजनस्तपःसंज्ञाः सत्यलोकोऽपि सुव्रते ॥२४१॥**

---

वहीं रहने को विवश होते हैं। कर्म विपाक के उदय से जन्म और आयु के उदय पर्यन्त वहाँ रहते हैं ॥२३७॥

ऐसी ब्रह्माण्ड की अव्यवस्था में भी रुद्र लोकों के भुवनेश, पातालाधिपति, कुष्माण्ड और हाटक आदि, निर्मल अम्लान अवस्था का आनन्द लेते रहते हैं ॥२३८॥

सृष्टि के पुनः प्रवर्त्तन की वेला की प्रतीक्षा करने की भावना भी मोह मुग्धता में समाप्त रहती है। तब तक लोकात्मायें निर्व्यापार ब्रह्मभुवन में ही पड़ी रहती हैं। इधर शून्यता के शिकार लोकों में दुर्धर दिग्दाह दहकता ही रहता है ॥२३९॥

उस समय भगवान् कह रहे हैं कि, देवि ! वह आग नरक और पातालों के साथ तीनों लोकों को भूर्भुवः स्वर्लोकों से उपलक्षित लोकों को भी क्षार करती ही रहती है ॥२४०॥

अन्य मह, जन और तपो लोक भी धूम राशि की धमक से ध्वस्त हो जाते हैं। सत्यलोक भी ब्रह्मा की सत्ता में समाहित रहता है। उसका भुवन भाव तो भस्म ही हो जाता है ॥२४१॥

पूर्वे च सर्वे–

**तिष्ठन्ति मोहितात्मानो निद्रया ते मृतोपमाः ।**

अथ–

**एवं दग्ध्वा जगत्सर्वं ज्वाला वक्त्रं विशेत्पुनः ।।२४२।।**

कालाग्नेर्दक्षिणमेव ।।२४२।।

**ततो वान्ति महावाता ब्रह्मनिःश्वाससम्भवाः ।**

ते च–

**नाशयन्ति च तद्भस्म जगद्दाहोद्भवं प्रिये ।।२४३।।**

अथ–

**ब्रह्मप्रस्वेदजं वारि तज्जगत्प्लावयेत्पुनः ।**
**तेनैव वारिणा देवि जगदेकार्णवं भवेत् ।।२४४।।**

कालवह्न्युष्मजोऽस्य प्रस्वेदः ।।२४४।।

अथ–

**निशाक्षये पुनः स्थित्वा सुखदुःखफलोदये ।**
**कर्मतः सर्वलोकस्य ब्रह्मा लोकपितामहः ।।२४५।।**
**शून्यभूतां समालोक्य भगवान्प्रभुरिच्छया ।**
**षड्विधां कुरुते सृष्टिं यथापूर्वव्यवस्थया ।।२४६।।**

---

सभी मोहितात्मा मोहनिद्रा में मुग्ध मूर्च्छा में ही पड़े रहते हैं । इस तरह सारे जगत् को जलाकर वह ज्वाला उसी कालाग्नि वक्त्र में समा जाती है । वह दक्षिण वक्त्र ही होता है ।।२४२।।

अब अग्नि के परम मित्र वायु वेग की वेला आ जाती है । ब्रह्मा के निःश्वास से उत्पन्न महावात विश्वदाहदग्ध अंगारों की राख को उड़ा लेते हैं । वातावरण उस भस्म से भर जाता है ।।२४३।।

इसके बाद ब्रह्मा को पसीना आ जाता है । उनके स्वेद से सृष्टि की शून्यता का अभिषेक होने लगता है । यही नहीं वह वारि महावारिधि का रूप ले लेता है । ब्रह्मा को पसीना कालाग्नि की ऊष्मा से होता है ।।२४४।।

अब वह अवसर आने वाला है, जब निशा का क्षय और सृष्टि के अरुणोदय की आभा से विश्व आलोकित हो सके । कर्म विपाक की सुखदुःखमयी फलवत्ता को ब्रह्मा विश्व फलक पर फैला सकें ।।२४५।।

यह फलोदय तो रात्रि के अन्त में ही होता है । अब ब्रह्मा अपनी निःशेष निद्रा की संस्कारशीलता को त्याग कर सावधान बैठ जाते हैं । अब सर्वसमर्थ

कर्मपरिपाकक्रमेण कर्मिणां सुखदुःखफलस्य उदयो यत्र तादृशे रात्र्यन्ते । स्थित्वा अनुपशान्तनिःशेषनिद्रासंस्कारो भूत्वा । कर्मतः परिपक्वादिच्छामात्रात् । षड्विधामिति नारकिस्थावरसरीसृपादिपश्वन्तां त्रिविधां क्रमात्क्रममपचितां तामसीम्, तमोरजःसमाविष्टां मानवीम्, रजःसत्त्वसमाविष्टां मौनीम्, सात्त्विकीं तु दैवीम् । व्यवस्थयेति भुवनादिमर्यादया ॥२४६॥

तत्र–

**प्रथमां तामसीं सृष्टिं करोति तमसोत्कटान् ।**

**नरकान्विविधाकारान्**

ततः अंशेन अंशेन तमसोऽनुत्कटत्वे–

**पशून्वै स्थावरान्तगान् ॥२४७॥**

पशूनिति सरीसृपपक्षिमृगपशूनित्यर्थः । ततोऽपि–

**तमोरजःसमावेशान्मानवान्संसृजेत्पुनः ।**

**रजःसत्त्वसमाविष्टः सृजेन्मुनिवरेश्वरान् ॥२४८॥**

एवमियत्पर्यन्तं ब्रह्मणः क्रमात्क्रमं निद्रासंस्कारस्य अधिकाधिकतरत्वम् ॥२४८॥

---

पितामह प्रभु अपनी कर्म विपाकमयी इच्छा के स्पन्दित होते ही छः प्रकार की सृष्टि का निर्माण करने में लग जाते हैं। ये छः प्रकार की सृष्टियाँ हैं। १–नारकीय २–स्थावर, ३–सरीसृप और ४–पशुभावमयी त्रिविध 'तामसी' तमस्+रजस् मयी 'मानवी' रजःसत्त्वमयी 'मौनी' और केवल सात्त्विक रूप 'दैवी'। इस तरह ३ तामसी+१मानवी+१मौनी+१दैवी कुल मिलाकर ३+१+१+१ =६ प्रकार की सृष्टि की रचना ब्रह्मा ने की। यह प्रक्रिया ब्रह्मा ने अपनी व्यवस्था के अनुसार अपनायी। यह भुवन मर्यादा की व्यवस्था मानी जाती है ॥२४६॥

तामसी सृष्टि तमोगुणमयी और बड़ी उत्कट होती है। अनेक प्रकार के नरकों की निर्मिति, स्थावरों और पशुओं की सृष्टि तामसी सृष्टि ही होती है ॥२४७॥

तमस्+रजस के समावेश से मानव सृष्टि होती है तथा राजस और सात्त्विक गुणों के मिश्रण से मौनी सृष्टि की संरचना विधाता करते हैं। इस प्रकार विधाता की निद्रा का संस्कार समाप्त और जागरण के संस्कार प्रस्फुटित हो जाते हैं ॥२४८॥

अथ–

**गतनिद्रः प्रबुद्धस्तु सत्त्वनिष्ठो जगत्पतिः ।**
**सृजेद्देवान्सलोकांश्च पूर्वयैव व्यवस्थया ।।२४९।।**

सह लोकैस्तन्निवासस्थानैर्वर्तन्ते ये तान् । एतच्च विशेषणं सिंहावलोकित-न्यायेन पूर्वत्रापि सम्बध्यते । पूर्वव्यवस्था पैशाचादिब्रह्मान्ता ।।२४९।।

इत्थं षड्विधायां सृष्टौ निष्पन्नायाम्–

**ततो रुद्रेन्द्रसूर्येन्दुनक्षत्राणि ग्रहेश्वराः ।**
**अधिकारं प्रकुर्वन्ति स्वे स्वे विषयगोचरे ।।२५०।।**

पारमेशान्नियोगात्–

**दिने दिने सृजत्येवं**

ब्रह्मा । कालाग्निस्तु–

**संहरेच्च दिनक्षये ।**

अस्य च ब्रह्मणः–

**दिनमानं च यत्प्रोक्तं रात्रिसंख्या च तावती ।।२५१।।**

तदित्थम्–

**अहोरात्रेण चानेन अब्दं वै पूर्ववत्स्मृतम् ।**

शतत्रयेण षष्ट्यधिकेन ।

**अब्दानां तु शते पूर्णे महाकल्पः स उच्यते ।।२५२।।**

---

अब ब्रह्मा गतनिद्र हो चुके हैं । उन्हें प्रबुद्ध संज्ञा से भगवान् विभूषित करते हैं । सत्त्वनिष्ठ जगत्पति ब्रह्मा उनके लोकों के साथ उसी पूर्व व्यवस्था के अनु-सार देव सृष्टि की रचना करते हैं । यहाँ सिंहावलोकित न्याय की चर्चा अवसर के अनुकूल है ।।२४९।।

यह छः प्रकार की सृष्टि निष्पत्ति का क्रम है । इसके बाद ब्रह्मा, रुद्र, इन्द्र, सूर्य चन्द्र, नक्षत्रों ग्रहों और इनके भुवनेशों की रचना, उसके अधिकारों की सीमा का निर्धारण और उनके विषयों की संरचना पर ध्यान देते हैं ।।२५०।।

ब्रह्मा अपनी सृजन प्रक्रिया में पूरी तरह तल्लीन रहकर प्रतिदिन अर्थात् निरन्तर सृजन शुरू कर देते हैं । इधर दिन क्षय पर कालाग्नि द्वारा महाविनाश की चर्चा भी की ही गयी है । यही सृष्टिसंहार का क्रम चलता रहता है । यहाँ ब्रह्मा के दिन और उनकी रातों की चर्चा भी की जा चुकी है ।।२५१।।

इसके साथ ही इनके अहोरात्र की भी चर्चा हो चुकी है । उसी क्रम से इनके अब्द और इनके समय की भी चर्चा की गयी है । १००वर्ष के पूर्ण होने पर ही नये महाकल्प की कलना की जाती है ।।२५२।।

**ब्राह्मे वर्षशते देवि दिव्यान्यब्दानि मे शृणु ।**
**एकनवतिकोटिस्तु तथा लक्षाणि विंशतिः ।।२५३।।**
**तथा सप्तैव खर्वाणि निखर्वाष्टकमेव च ।**
**ब्राह्मं वर्षशतं चैतज्ज्ञातव्यं कालवेदिना ।।२५४।।**

दिव्यवर्षमानेन ब्राह्ममहः सन्ध्याकालं विना सविंशतिलक्षा कोटिरेकेत्युक्तम्, रात्रिश्च तावतीति कोटिद्वयं सचत्वारिंशल्लक्षम् । एतद्दिनानां शतत्रयेण सषष्टिना गुणितमष्टौ वृन्दानि, षडर्बुदानि, चतस्रश्च कोटयो भवन्ति । सन्ध्याकालोऽपि षण्णवत्या सहस्रैर्य उक्तः, सोऽपि शतत्रयेण सषष्टिना कलितः संस्तिस्रः कोटयः, पञ्चचत्वारिंशल्लक्षाणि, षष्टिः सहस्राणि भवन्ति । सोऽपि सायंप्रातर्भेदाद्द्विगुणः सन्कोटयः षट् लक्षाण्येकनवतिर्विंशतिः सहस्राणि भवन्ति । उभयं वृन्दान्यष्टौ, अर्बुदानि सप्ततिरेकनवतिर्लक्षाणि, विंशतिः सहस्राणि भवन्ति ८७०९१२०००० । एतदपि वत्सरसङ्ख्या शतेन कलितं निखर्वाण्यष्टौ खर्वाणि सप्त वृन्दस्थाने शून्यमेकनवतिः कोट्यो लक्षाणि विंशतिरिति ८७०९१२०००००० । इत्थमेषा यथोक्तैव सङ्ख्या भवति । एकान्ननवतिः कोट्य इति अपपाठः ।

तदित्थम्–

**दैविकेन तु मानेन मानमित्थं प्रकीर्तितम् ।**

अथ एतदेव–

**लौकिकेन तु मानेन पुनश्चैव निबोध मे ।।२५५।।**

---

ब्रह्मा के सौ वर्ष में दिव्य अब्दों के विषय में भगवान् कह रहे हैं कि, देवि ! दिव्य वर्ष के मान के अनुसार सन्ध्या के विना १ करोड़ २० लाख दिन का होता है । इतनी ही बड़ी रात मिलाकर २ करोड़ ४० लाख दिन का एक अहोरात्र होता है । इनके मान के तीन सौ साठ दिन से गुणा करने पर ८ वृन्द ६ अर्बुद चार करोड़ होता है । इसका सन्ध्याकाल भी ९६ हजार दिनों का होता है । यह भी ३६० से गुणित करने पर तीन करोड़ ४५ लाख साठ हजार होते हैं । यह भी सन्धि भेद से दुगुना करने पर ६करोड़ ९१ लाख २० हजार वर्ष होता है । दोनों मानों के मेल ८ वृन्द ७० अर्बुद (अरब) ९१ करोड़ २० हजार की संख्या होती है । यह वर्ष की सौ संख्या से गुणा करने पर आठ निखर्व सात वृन्द ९१ करोड़ २० लाख होते हैं । ८७०९१२०००००० की यह एक उक्त संख्या का मान है । यह ब्रह्मा के सौ वर्ष का मान है ॥२५३-२५४॥

इस तरह लौकिक और देव मान में महान् अन्तर पड़ता है । लौकिक मान के अनुसार अप्रकल्प्य आकलन करना पड़ता है ॥२५५॥

तद्यथा–

**द्वात्रिंशदब्दकोट्यस्तु तथा खर्वाष्टकं प्रिये ।**

**खर्वद्वयं च देवेशि निखर्वाः पञ्च एव तु ।।२५६।।**

**शङ्कुत्रयं पद्ममेकं सागरत्रयमेव च ।**

पूर्वोक्तैकनवतिकोट्या दैविकमानकलितस्य ब्राह्मवर्षशतस्य लौकिकवत्सरमानेन षष्टिशतत्रयकलनया उक्तैव सङ्ख्या आयाति । यत्तु श्रीभुल्लकः–

'........थाब्दकोट्यस्तु एकं चैवार्बुदं प्रिये ।

खर्वाशीतिस्तथा चैव निखर्वाणां च पञ्चकम् ॥

चतुष्टयं च शङ्कुनां त्रिंशत्सागर एव च' ।

इति अपठत्, तदसङ्गतत्वादुपेक्ष्यमेव ।

इत्थं लौकिकाब्दमानेन–

**एतद्देवि समाख्यातं ज्ञातव्यं च मुमुक्षुभिः ।।२५७।।**

महाकाल्पान्तावस्थितिदाय्यपि ब्राह्मं पदं संह्रियमाणत्वात्पर्यन्तविरसम्, एवं वक्ष्यमाणनीत्या अनाश्रितान्तमपीति सर्वथा स्वस्तिस्वप्नोपमेभ्यो भोगेभ्य इति

---

९१ करोड़ दैविक मान वाले ब्राह्म सौ वर्ष का लौकिक वत्सर मान ३६० से गुणा करने पर जो मान ऊपर आया हुआ है, वही मान होगा । भुल्लक ने इसे ३० सागर ४ शङ्कु ५ निखर्व ८० खर्व १ अर्बुद सौ करोड़ की संख्या का मान कहा है । वह क्षेम की दृष्टि में उपेक्ष्य है ।

भगवान् कह रहे हैं कि, इस गणना से परिचित होना आवश्यक है । इतनी महान अब्द राशि के समक्ष मनुष्य की क्या विसात फिर भी वह इस छोटी आयु में कितने कुकर्म और दुष्कर्म करता है । इस पर विचार करने से मनुष्य के मन में वैराग्य की एक किरण अवश्य ही उद्दीप्त हो सकती है । इसीलिये भगवान् ने मुमुक्षुओं के लिये इसे हितकर कहा है ।

काल की इस कलना में यह स्पष्ट हो जाता है कि, जगत् में स्थिति की सीमा महाकल्प पर्यन्त है । ब्रह्मा पद संह्रियमाण होने के कारण यह स्थिति अन्त में विरस हो जाती है । इसीलिये अनाश्रित पर्यन्त सर्वथा सुखस्वप्नोचित भोग अन्त में भीषण कर्म विपाक में डालने के कारण इनमें रच पच जाने की प्रक्रिया से अपने जीवन को नष्ट कर डालना कहाँ की बुद्धिमानी है ?

इससे करोड़ों गुना अच्छा है कि, दिक्, काल और आकार में कलित ललित रूप से अनुभव में आने वाले चिद्घन पर भैरव स्वरूप की समापत्ति जैसे

मत्वा दिक्कालाकाराकलितचिद्घनपरभैरवस्वरूपसमापत्तिरेव मुमुक्षुभिराश्रयणीयेति तात्पर्यम् ॥२५७॥

उपसंहरति–

**एतल्लौकिकमानेन ब्राह्ममब्दशतं स्मृतम् ।**

उक्तवक्ष्यमाणपरिमाणोपयोगिन्या एकादिपरार्धान्तायाः सङ्ख्यायाः क्रमेण रूपं लक्षयति–

**एकं दशगुणं पूर्वं शतं दशगुणं तु तत् ॥२५८॥**
**शतं दशगुणं कृत्वा सहस्रं परिकीर्तितम् ।**
**सहस्रं दशगुणितमयुतं तद्धि कीर्तितम् ॥२५९॥**
**दशायुतानि लक्षं तु नियुतं दश तानि च ।**
**दश तानि च कोटिः स्याद्दश कोटिस्तथार्बुदम् ॥२६०॥**
**अर्बुदैर्दशभिर्वृन्दं खर्वं दशभिरेव तैः ।**
**दशभिस्तैर्निखर्वं तु शङ्कुः स्याद्दश तानि तु ॥२६१॥**
**शङ्कुभिर्दशभिः पद्मं दश पद्मानि सागरः ।**
**सागरैर्दशभिर्मध्यमन्त्यं तैर्दशभिः स्मृतमृ ॥२६२॥**
**अन्त्यं दशाहतं कृत्वा परार्धं परिकीर्तितम् ।**

उपसंहरति–

**एवमष्टादशैतानि स्थानानि गणितस्य तु ॥२६३॥**

भवन्तीति शेषः ॥२६३॥

---

भी प्राप्त की जाय । यही तात्पर्य है कि, भगवान् ने इसे मुमुक्षुओं के लिये हितकर कहा है ॥२५७॥

इस तरह दिव्य और लौकिक दोनों विधाओं के अनुसार ब्रह्मा के सौ वर्षों का मान दिग्दर्शित कराया गया है । अब उसी गणना में प्रयुक्त संख्याओं की एक से लेकर परार्ध पर्यन्त संख्या-संज्ञाओं का सनामोल्लेख कथन किया जा रहा है ।

१ में दश का गुणन १० । दश में दश का गुणनफल सौ । सौ में दश का गुणनफल सहस्र । सहस्र में दश का गुणित कर अयुत । दश अयुत लक्ष, दश लक्ष नियुत । दशनियुत कोटि । दशकोटि अर्बुद । दश अरब वृन्द । दश वृन्द=निखर्व, दश निखर्व शङ्कु । दश शङ्कु पद्म । दश पद्म सागर, दश सागर मध्य और दश मध्य अन्त । दश अन्त परार्ध होता है । यह अठारह प्रकार की दश गुणित कलना है । इसी में पूरा भारतीय गणित आ जाता है ॥२५८-२६३॥

एवं प्रसङ्गात्सङ्ख्यास्वरूपमुपदर्श्य प्रकृतमाह–

**महाकल्पस्य पर्यन्ते ब्रह्मा याति परे लयम् ।**

अवृत्तपरशक्तिपात: परे इति सापेक्षतया प्रकृष्टे समनन्तरे कारणे लीयते, वृत्तपरशक्तिपातस्तु परमशिवे–

...........परस्मिन् ब्रह्मणि व्रजेत्' ।

इति पूर्वग्रन्थेऽयमेव आशय: । एवमुत्तरत्रापि अनुसर्तव्यम् ।

यश्च अयमेवमुक्तौ महाकल्प:–

**विष्णोश्च तद्दिनं प्रोक्तं रात्रिर्वै तत्समा भवेत् ।।२६४।।**

ब्रह्माण्डानुविषयलोकस्थस्य ॥२६४॥

किञ्च–

**अनेन परिमाणेन तस्याब्दं तु विधीयते ।**

अह्नां चैव शतत्रयेण सषष्टिना ।

**वर्षाणां च शते पूर्णे सोऽपि याति परे लयम् ।।२६५।।**

इत्थम्–

**विष्णोरायुर्यदेवोक्तं रुद्रस्यैतद्दिनं भवेत् ।**

रुद्रलोकस्थस्य । स च–

**दिने दिने सृजत्यन्यौ ब्रह्मविष्णू प्रजापती ।।२६६।।**

प्राक्सृष्टयो: परब्रह्मणि लयादन्यं विष्णुं सृष्ट्वा, तन्मूर्त्याविष्टो ब्रह्माण-मप्यन्यं सृजतीत्यर्थ: ।

---

महाकल्प के पर्यन्त भाग में ब्रह्मा का लय उनसे अपेक्षित प्रकृष्ट रूप में हो जाता है । कार्य का लय कारण में होता है । ब्रह्मा का कारण परमशिव ही माना जाता है । लिखा भी है कि,

'परस्मिन् ब्रह्मणि व्रजेत्' अर्थात् प्रकृष्ट ब्रह्म रूप परम शिव में लय हो जाता है । परशक्तिपात जिस पर हो चुका है, ऐसा व्यक्ति परशिव के अतिरिक्त जा भी कहाँ सकता है ? इसी परिपाटी का अनुसरण इस प्रक्रिया में किया जाता है । यह महाकल्प ही विष्णु का एक दिन और उतनी ही बड़ी रात भी होती है । उन्हीं तीन सौ साठ दिव्य दिनों का एक वर्ष होता है । सौ वर्षों के पूरा होने पर विष्णु का भी विलय पर शिव में हो जाता है ॥३६४-२६५॥

विष्णु की पूरी आयु का मान रुद्र के एक दिन के बराबर होता है । रुद्र लोक में इतने बड़े दिन होते हैं । यहाँ यह प्रश्न उठता है कि, ब्रह्मा के लय होने पर विष्णु के दिन के प्रारम्भ में क्या ब्रह्मा का अस्तित्व नहीं रहता ?

युक्तं च एतद् यस्मात्–

**ब्राह्मी च वैष्णवी शक्तिरधिकारपदं गता ।**

**यं चाधितिष्ठत्यात्मानं तत्संज्ञां स प्रपद्यते ।।२६७।।**

चो भिन्नक्रमः । पारमेश्वरी ब्राह्मी वैष्णवी च शक्तिर्यमात्मानं पुद्गलमधितिष्ठत्यधिकुरुते, स आत्मा तत्संज्ञामिति ब्रह्मत्वं विष्णुत्वं च प्राप्नोतीत्यर्थः ।।२६७।।

प्राप्य च तद्रूपत्वमसौ–

**तदाधिकारं कुरुते इच्छया परमात्मनः ।**

परमात्मनो निर्णीतस्वरूपस्य परमशिवस्य, न तु परेच्छाधिष्ठितोत्तरोत्तरकारणस्य इच्छया ।

---

या विष्णु के लीन हो जाने और रुद्र के दिन के प्रारम्भ में क्या विष्णु का अस्तित्व नहीं रहता ? इसी का उत्तर दे रहे हैं कि, दिन के प्रारम्भ में विष्णु अपनी मूर्त्ति में आविष्ट नये ब्रह्मा को प्रजापति रूप में सृष्ट कर लेते हैं । विष्णु के लीन होने पर विष्णु में आविष्ट ब्रह्मा भी लीन हो जाते हैं । इसके बाद जब रुद्र का दिन आता है, तो अपने स्वात्म में आविष्ट विष्णु और ब्रह्मा को पुनः प्रजापति के रूप में सृष्ट कर लेते हैं । होता यह है कि, ब्राह्मी और वैष्णवी शक्तियाँ रुद्र में ही अधिष्ठित रहती होंगी । रुद्र जिस समय प्रजापतियों के रूप में नयी सृष्टि की योजना करते होंगे, तत्काल ब्राह्मी और वैष्णवी शक्तियों में स्वाभाविक उल्लास होता होगा । उस समय रुद्र उन्हें अपना अधिकार सौंपते होंगे । ब्राह्मी और वैष्णवी शक्तियाँ किसी विज्ञानाकल की प्रबुद्ध आत्मा का वरण करती होंगी और इन प्रजापतियों के साकार विग्रहों का सर्जन हो जाता होगा । इसी बात को इस श्लोक में लिखा है कि, जिस आत्मा को ये अपना अधिष्ठान बनाती होंगी वही ब्राह्मी वाला ब्रह्मा और वैष्णवी का वरण किया हुआ आत्मा विष्णु के रूप साकार होगा । ब्रह्मा, विष्णु के प्रकृष्ट पररूप में विलीन होने और ब्राह्मी, वैष्णवी शक्तियों के वरण करने पर ब्रह्माविष्णु के साकार विग्रह बन जाते हैं । यह विस्मयजनक सृष्टि प्रक्रिया केवल इसी शास्त्र का आविष्कार है और यह तर्क की कसौटी पर खरा उतरने वाली प्रक्रिया है ।।२६६-२६७।।

इस संज्ञा को प्राप्त करते ही वह भाग्यशाली आत्मा परमात्मा की इच्छा से अपना काम ज्यों का त्यों सम्भाल लेता है । इस रहस्य का ज्ञान किसी को शायद ही होता होगा । यह किसी कारण की इच्छा नहीं होती वरन् परम शिव की इच्छा का ही यह कार्यान्वयन है । परमेश्वर की इच्छा इन्हीं दो प्रजापतियों तक सीमित नहीं रहती वरन् इन दोनों के अतिरिक्त इसी इच्छा से ऊपर से नीचे तक के सभी

यथा च ब्रह्मविष्णू पारमेश्वरी ब्राह्मी वैष्णवी, शक्तिः परमार्थतः तथा विश्वमिदं पारमेश्वरशक्तिमयमेवेत्याह–

**ब्रह्मविष्ण्विन्द्ररुद्राश्च विद्येशा ईश्वरस्तथा ।।२६८।।**
**लोकाधिपाश्च देवेशि तथा च भुवनाधिपाः ।**
**ग्रहादिमातरो रुद्रा योगनक्षत्रराशयः ।।२६९।।**
**शक्तियुक्तास्तु ते सर्वे भवन्ति तदधिष्ठिताः ।**
**तत्पराक्रमवीर्यास्तु स्वकीये तु पदे स्थिताः ।।२७०।।**

लोकाधिपा इन्द्राद्या लोकपालाः । ग्रहादयश्च मातरश्चेति द्वन्द्वः, मातरो ब्राह्मयाद्याः । योगाः सुनफाद्या ज्योतिःशास्त्रप्रसिद्धाः । ते सर्वे इति उक्तास्तया परमेश्वरेच्छया अधिष्ठिताः सन्तः शक्तियुक्ता निजनिजसामर्थ्यभाजो भवन्ति ।।२७०।।

पूर्वं ब्राह्मया वैष्णव्या च अधिष्ठितत्वं ब्रह्मविष्ण्वोरुक्तम्, इदानीं तु ब्रह्मादिभिरपि सह सर्वेषां परशक्त्यधिष्ठितत्वमतश्च सर्वमिदं जगत्–

**शिवस्यैका महाशक्तिः शिवश्चैको ह्यनादिमान् ।**
**सा शक्तिर्भिद्यते देवि भेदैरानन्त्यसम्भवैः ।।२७१।।**

---

पद संचालित होते हैं, वही कह रहे हैं । भगवान् भैरव के अनुसार ब्रह्मा, विष्णु, रुद्र, विश्वेश्वर, ईश्वर, लोकाधिप (लोकपाल) भुवनेश्वर, ग्रह आदि, ब्राह्मी आदि, मातृकायें, रुद्रलोक वासी सभी रुद्र, सारे योग, सभी नक्षत्र, राशियों से सभी अपनी अपनी शक्तियों से मुक्त होकर उस पद पर अधिष्ठित होकर वही संज्ञायें प्राप्त कर लेती हैं और अपने कार्यों का सम्पादन करने लगती हैं । वही पराक्रम, वही बल और वही वीर्यात्मक शाक्त सामर्थ्य लेकर ही अपने पद पर अवस्थित होते हैं और हैं । योग ग्रह, नक्षत्र और राशियाँ ये सब ज्योतिःशास्त्रीय विषय हैं । उक्त सभी पदों पर अधिष्ठित पदासीन शक्तिमन्त परमेश्वर की इच्छा के अधीन ही अपने अपने प्राप्त सामर्थ्य के बल पर अपने उत्तरदायित्व का निर्वाह करते हैं ।।२६८-२७०।।

इस तरह यह सारा जगत् एक मात्र परमशिव की इच्छा शक्ति पर निर्भर है, यह सिद्ध हो जाता है । सबका पर शक्त्यधिष्ठितत्व स्वयं सिद्ध है । यही कह रहे हैं–

परमशिव की ही यह महाशक्ति है । इसे ही इच्छा शक्ति या स्वातन्त्र्य की संज्ञा से विभूषित करते हैं । इसी तरह इस शक्ति से ही शक्तिमान् शिव अनादिदेव ही सबके आराध्य हैं । यही इनकी इच्छा शक्ति ही अनादिमती चिन्मयी शक्ति

महती स्वातन्त्र्याख्या शक्तिः । शिवः प्रकाशानन्दघनः श्रेयोरूपः । चकारात् शक्तिरपि एका अद्वितीया अनादिमती च भेदैर्नानावैचित्र्यैर्भिद्यते ग्राह्यग्राहकाद्याभासतया स्फुरति ।

शिवशक्त्यद्वयमयतां प्रासङ्गिकीमुक्त्वा प्रकृतमाह–

**एवं वै कुरुते सृष्टिं रुद्रश्चैव दिने दिने ।**

**संहारं च दिनान्ते वै**

सा च संसाररूपस्य–

**रात्रिर्वै तत्समा भवेत् ।।२७२।।**

दिनरात्रिसाम्यमेव ईश्वरेच्छातः सूर्यसोमसञ्चारादिति टीकाकारमतमसमञ्जसं तत्तद्भुवनतदीश्वरप्रभाभास्वरेषु ब्रह्मादिलोकेषु सूर्यादीनां प्रकाशकत्वेन क्वापि अश्रुतत्वात् ॥२७२॥

इत्थम्–

**दिनरात्रिप्रमाणेनानेन स्याद्वत्सरोऽस्य च ।**

अस्येति रुद्रस्य ।

**वत्सराणां शते पूर्णे शतरुद्रदिनक्षयात् ।।२७३।।**

**सोऽपि याति परं स्थानं यद्गत्वा निष्कलो भवेत् ।**

रौद्रं वर्षशतं शतरुद्राणां दिनम्, क्षयः पर्यन्तः ।

---

ही नाना प्रकार के विश्वात्मक प्रसार में ग्राह्य ग्राहकादि अनन्त आभासों में भासमान होती है । प्रकाशानन्दघन परमात्मा की स्वातन्त्र्य शक्ति का यह सारा विश्वविलास इस प्रकार उल्लसित है ॥२७१॥

प्रकरण रुद्र के दिनोदय का था । उसी उक्त प्रकार से रुद्र भी अपने उत्तरदायित्व का निर्वाह करते हैं । अपने दिन के अन्त में संहार की भी वही प्रक्रिया अपनाने के लिये भी बाध्य हैं । संहार के समय की वह महा असीम समयावधि रुद्र की रात्रि मानी जाती है और रुद्र के दिन के बराबर ही यह रात भी होती है । दिन और रात्रि का साम्य भी परमेश्वर स्वातन्त्र्य का ही परिणाम है । सूर्य और सोम के संचार का क्रम केवल मृत्युलोक में होता है । महः जनः तपः सत्यम् के साथ ब्रह्मा, विष्णु रुद्रादिलोकों में इनका संचार शास्त्र में वर्णित नहीं है ॥२७२॥

दिन और रात दोनों के प्रमाणों के अनुसार ब्रह्मा के प्रकरण में वर्णित दिव्यमान के अनुसार ही इनके वत्सर भी होते हैं । रुद्र वर्षों के सौ साल पूर्ण हो जाते हैं तो यह शतरुद्रों का एक दिन होता है । जब इसका क्षय होता है, तो

तदन्ते च–

**तस्मिन्स्थाने पुनश्चान्यस्तत्समश्च प्रभुर्भवेत् ।।२७४।।**
**रौद्रशक्तिसमायोगाद्ब्रह्मविष्ण्विन्द्रनायकः ।**

तदित्थमहोरात्रादिकलनया–

**शतरुद्रास्तु देवेशि स्वाब्दानां तु शतक्षये ।।२७५।।**
**ते प्रयान्ति परं तत्त्वं ततोऽण्डं तु विनश्यति ।**

शतरुद्रजीवितावधिर्ब्रह्माण्डस्थितिकाल इत्यर्थः ।

कीदृगण्डमित्याह–

**सर्वभूतगुणाधारं सर्वतत्त्वालयालयम् ।।२७६।।**
**सपर्वतवनोद्यानद्वीपसागरमण्डितम् ।**
**विमानमालाकुलितं ग्रहनक्षत्रमण्डितम् ।।२७७।।**
**देवदानवगन्धर्वसिद्धविद्याधरोरगैः ।**
**ऋषिभिर्मानुषाद्यैश्च सप्तलोकनिवासिभिः ।।२७८।।**

---

शतरुद्र भी परमशिव में लीन हो जाते हैं । वहाँ जाकर इसे भी निष्कलत्व की उपलब्धि हो जाती है । उनके स्थान पर उनके समान ही रौद्रशक्ति समावेश के आधार पर कोई दूसरा शक्तिमन्त उसका प्रभु हो जाता है ॥२७३-२७४॥

वह ब्रह्मा, विष्णु और रुद्रेन्द्रों का भी नायक माना जाता है । शतरुद्र भी अपने दिव्य सौ वर्ष पूरा कर परमशिव रूप सर्वान्त तत्त्व में विलीन हो जाते हैं । इस विलय के बाद अण्ड प्रलय भी हो जाता है । अर्थात् पार्थिवाण्ड, प्रकृत्यण्ड, मायाण्ड के बाद शैवस्वातन्त्र्य शक्ति से पूर्ण जो शक्त्यण्ड है, यह भी समाप्त हो जाता है । अण्डों की समाप्ति का यह स्वरूप अप्रकल्पनीय है । अब केवल शिवाण्ड रूप पाँचवाँ शाश्वत अण्ड ही बचा रहता है ॥२७५॥

अण्डस्वरूप की चर्चा कर रहे हैं । यह समस्त भूतमान का गुणाधार होता है । सभी तत्त्वों की तात्त्विकता का आलय होता है । सभी पर्वत, वन, उद्यान, द्वीप, सागर इन्हीं अण्डों के अवयव रूप होते हैं । इसमें दिव्य देवविमानों की व्याप्ति (भरी पूरी जमात) होती है । सारे ग्रह और नक्षत्र इन्हीं अण्डों के अन्तराल में अवस्थित होते हैं । देव, दानव, गन्धर्व, सिद्ध, विधाधर, उरग, ऋषि-मुनि, मनुष्य अधिक क्या कहा जाय सातों लोकों चौदहों भुवनों के जीव इसी में जीवन का वरदान प्राप्त करते हैं । नरक और पातालादि भुवनों से भरा होता है । इसी में पाण्डित्य और शौर्यादि गुण भी गणनीय होते हैं । षट्त्रिंशत्तत्त्वमय

**नरकैश्चैव पातालैर्युक्तं भुवनमण्डितम् ।**

सर्वेषां भूतानां पृथ्व्यादीनाम्, गुणानां च शब्दादीनाम्, भूतगुणानां च पाण्डित्यशौर्यादीनामाश्रयः, तथा सर्वतत्त्वालयानां षट्त्रिंशत्तत्त्वमयानां नाना-शरीराणामालयो निवासरूपः ।

ईदृशं च–

**अशेषभुवनाधारमण्डमप्सु प्रलीयते ।।२७९।।**

एवं च यथोत्पादं तत्त्वानि स्वकारणेषु लीयन्ते । यदद्वयति–

'आपस्तेजसि लीयन्ते............'। (११।२८४) इत्यादि ॥२७९॥

इत्थं शतरुद्रान्तायां स्थितौ संहृतायां ब्रह्माण्डोर्ध्वाधरकर्परिकोपरिवर्ती संहर्तृरूपः–

**ततः कालाग्निरुद्रश्च कालतत्त्वे लयं व्रजेत् ।**

अशेषविश्वकलनाकारित्वात्कालश्च असौ तत्त्वं च तदिति कालतत्त्वमकाल-कलितः परमेश्वरः ।

---

विश्व का उल्लास इसी में विलसित होता है । इस तरह यह सिद्ध हो जाता है कि, अशेष भुवनों और लोकालोकों का यही आधार होता है । यह अण्ड अप् तत्त्व में विलीन हो जाता है । और अप् भी तेज में, तेज भी वायु में वायु भी आकाश में और इसी क्रम में सारे तत्त्व उत्तरोत्तर तत्त्वों में विलीन हो जाते हैं । ११।२८४ में भी यह बात कही गयी है ॥२७६-२७९॥

शतरुद्रों के अन्त पर्यन्त जिस प्रकार की स्थिति बनी हुई थी, उसके संहतहो जाने पर ब्रह्माण्ड की ऊर्ध्व और अधर कर्परिकाओं के ऊपर संहर्त्ता रूप कालाग्नि रुद्र काल तत्त्व में विलीन हो जाते हैं । अशेष विश्व की कलना के कर्त्ता भगवान् के आज्ञाकारी शक्तिमन्त काल में विलीन हो जाते हैं । यहाँ काल के साथ तत्त्व शब्द के प्रयोग के आधार पर आचार्य क्षेमराज ने काल भी और तत्त्वरूप भी यह विग्रह बनाकर अकाल कलित परमेश्वर अर्थ ही स्वीकार किया है । इस तरह कालाग्नि रुद्र का विलय काल तत्त्वरूपी अकाल कलित परमेश्वर अर्थ ही लिया गया है ।

यदि ऐसी बात है, तो अप् आदि तत्त्वों का संहार कौन करता है ? इस जिज्ञासा का समाधान कर रहे हैं–

भगवान् कह रहे हैं कि, अप् तत्त्व से लेकर माया तत्त्व पर्यन्त समस्त ३१ तत्त्वों का संहार स्वयं काल ही करता है । यह जगत् के इस चराचर रूप

यद्येवम्, अबादितत्त्वसंहारं कः करोतीत्याशङ्क्य आह–

**अप्तत्त्वात्तु समारभ्य यावन्मायान्तगोचरम् ॥२८०॥**
**तत्सर्वं संहरेत्कालः स्वयमेव चराचरम् ।**

काल इति अशेषविश्वकलनः परमेश्वर एव ऊर्ध्वोर्ध्वभुवनेशमूर्तिमाविश्य अधोऽधोवर्तितत्त्वसंहारं क्रमेण करोतीत्यर्थः । एतच्च अग्रे व्यक्तीभविष्यति ।

शुद्धेऽध्वनि कः संहर्तेत्याह–

**तदूर्ध्वे शुद्धमध्वानं यावच्छक्त्यन्तगोचरम् ॥२८१॥**
**तत्सर्वं संहरेद्घोरमघोरो घोरनाशनः ।**

शक्त्यन्तस्य अध्वनो घोरमिति विशेषणाद् मायादिक्षित्यन्तस्य घोरतरत्वमिति अर्थादवगतम् । न विद्यते घोरं भेदसंसृष्टं रूपं यस्य सोऽघोर इत्ययमर्थो घोरनाशन इत्यनेन व्याख्यातः । अत्रापि च यथोत्तरमीश्वरसदाशिवादितत्त्वेश्वरमूर्त्याविष्ट एव अघोरभट्टारकः अधराधरतत्त्वं संहरतीत्यर्थो वक्ष्यमाणग्रन्थसङ्गत्या बोद्धव्यः ।

प्रसङ्गागतं संहर्तृविचारमुपसंहरति–

**त्रिष्वेवं संस्थितो रुद्रः कालरूपी महेश्वरः ॥२८२॥**

त्रिषु पृथ्वीमायाशक्त्यन्तेषु पदेषु । एवमिति संहर्तृतया । रुद्र इति कालाग्निरुद्रो भुवि, कालरूपी मायान्तं पदं कलयन्ननन्तभट्टारकः, शक्त्यन्तेषु महेश्वरः ।

---

को भी संहृत कर लेता है । अर्थात् अशेष विश्व के कलन कर्त्ता परमेश्वर ऊर्ध्व ऊर्ध्व भुवनेश मूर्त्तियों में आविष्ट होकर अधो अधोवर्त्ति तत्त्वों का संहार क्रम पूर्वक वही करते हैं ॥२८०॥

इसके ऊपर शुद्ध अध्वा का क्षेत्र आता है । भगवान् कह रहे हैं कि, इसके ऊपर शुद्ध अध्वा का जो क्षेत्र शक्ति पर्यन्त है, इसका संहार तीन शक्तिमन्त करते हैं । १–घोर, २–घोरतर और ३–अघोर । माया से क्षिति पर्यन्त का संहार घोरतर करते हैं । शक्त्यन्त अध्वा का संहार घोर करते हैं और अघोर परमेश्वर के विषय में कह रहे हैं कि, वे तो घोर के नाशक हैं । उस समय घोर सृष्टि की समाप्ति हो जाती है । सारा भेदवाद अभेद अद्वय तत्त्व में समाहित हो जाता है । यथोत्तर ईश्वर, सदाशिव और शक्त्यन्त तत्त्वेश्वर मूर्त्ति में आबिष्ट अघोर भैरव भट्टारक अधराधर तत्वों का संहार करते हैं ।

इस तरह पृथ्वी माया और शक्त्यन्त पदों में संहर्त्ता रूप से कालाग्निरुद्र पृथ्वी का, काल रूप मायान्त पद का और शक्त्यन्त का महेश्वर रूप से संहार

अथवा एको महेश्वरो रोदनद्रावणकारित्वाद्रुद्रस्त्रिषु पदेषु कालरूपी संहर्ता कालाग्निरुद्रादिवैचित्र्येण स्थित हत्यर्थः ॥२८२॥

एवं प्रासङ्गिकमर्थमुपसंहृत्य प्रकृतमनुसरति–

**ततः संहरते तोयममरेशशतात्यये ।**

तेजस्तत्त्वाधिष्ठितो रुद्रः अमरेशसम्बन्धिवर्षशतसङ्ख्यातस्वदिनान्ते तोयं जलतत्त्वं संहरतीत्यर्थः । अमरेशस्य च शतरुद्रायुष्कालपरीमाणं दिनमिति तदनुसारेण प्राग्वद्वर्षम्, तच्छतमायुस्तदपि तेजस्तत्त्वाधिपतेर्दिनमित्यादि उत्तरोत्तरं क्रमेण अनुसरणीयम् । 'अमरेशः शतात्यये' इति अपपाठः स्वशतात्यये तस्य संहर्तृत्वायोगात्तदधरवर्तिशतरुद्रात्ययेऽपि तोयतत्त्वसंहाराभावात् ।

तदेव आदिशति–

**एवं भूताद्यावरणपतयश्च शतात्यये ।।२८३।।**
**संहरन्ति च देवेशि सृजन्ति च परस्परम् ।**

भूततन्मात्राद्यावरणेश्वरा यथोत्तरमैश्वराणि अधराधरतत्त्वानि तदीश्वरसम्बन्धिवर्षशतान्तरूपे स्वदिनान्ते संहरन्ति, पुनस्तावत्कालस्वरात्र्यन्ते अन्यानि सृजन्ति । क्वचित्तु–

---

करते हैं । अथवा एक ही महेश्वर रोदन और द्रावण युक्ति से तीनों पदों का काल बन संहार करते हैं । एक ही परममहेश्वर अपने स्वातन्त्र्य सामर्थ्य से सबका संहार करते हैं ॥२८१-२८२॥

तेजस्तत्त्व में अधिष्ठित रुद्र अमरेशों के सौ वर्ष व्यतीत हो जाने के बाद तोयतत्त्व का शोषण रूप संहार कर लेते हैं । शतरुद्रों के आयु के बाराबर ही अमरेश का दिन होता है । इसी गणना के अनुसार इनका भी होता है और आयु भी सौ वर्ष की ही होती है । उस समय तेजस्तत्त्वाधिपति का दिन होता है । अमरेश के अधोवर्त्ती शतरुद्र होते हैं । अतः शतरुद्रों के सौ वर्ष बीतने के बाद ही अमरेशों का क्रम आता है, और अमरेशों के सौ वर्ष बीतने के बाद ही तेजस्तत्त्वसे तोय का संहार होता है । अमरेश स्वयं संहार नहीं करते ।

इसी तरह भूत तन्मात्र आदि के आवरणेश भी इसी तरह उत्तरोत्तर शतवर्षीय आयु के अनन्तर और अधिकारेशमय अधर अधरतत्त्वों और उन उन तत्त्वेशों के सौ वर्ष पूरा होने पर अपने दिवसों के प्रारम्भ पर अधराधर का संहार कर लेते हैं ॥२८३॥

एक पक्ष कहता है कि, भूतपत्तियों के सौ वर्ष पूरा हो जाने पर और अपने नैष्कल रूप में विलीन हो जाने पर सृजन और संहार का यह क्रम शाश्वत चलता

'एवं भूतपतीनां तु प्राप्ते वर्षशतात्यये ।
यातैस्तैर्निष्कलस्थानं ततो भूतानि शाङ्करि ॥
संहरन्ति च देवेशि सृजन्ति च परस्परम्' ।

इति पाठः । अत्रापि यथोत्तरमधराधरगतानि तत्त्वानीति व्याख्येयम् ।

तत्त्वानां परस्परलयात्मकं संहारं स्फुटयति–

**आपस्तेजसि लीयन्ते तत्तेजश्चानिले पुनः ॥२८४॥**
**तथानिलोऽम्बरं प्राप्य सह तेनैव लीयते ।**
**तन्मात्रेषु प्रलीयन्ते यथोत्पन्नानि च क्रमात् ॥२८५॥**
**तन्मात्राण्यप्यहङ्कारे सेन्द्रियाणि यथाक्रमम् ।**
**स बुद्धौ सा च गहने गुणसाम्ये प्रलीयते ॥२८६॥**
**गुणसाम्यमनिर्देश्यमप्रतर्क्यमनौपमम् ।**
**तस्मिञ्जगदशेषं तु प्रसुप्तमिव तिष्ठति ॥२८७॥**

स तेनैव लीयत इति तेन अन्तःकृतपृथिव्यप्तेजोरूपतत्त्वत्रयेण वायुना सह व्योम लीयते । क्व लीयत इत्यत आह तन्मात्रेषु इति । प्रलीयन्त इति बहुवचनस्य प्रशब्दस्य च अयमाशयः–यद् व्योम तल्लीनानि पृथिव्यप्तेजोवायुतत्त्वानि स्व-कारणेषु तन्मात्रेषु प्रकर्षेण लीयन्ते, तन्मयानि भवन्ति । यथोत्पन्नानीति एकत्वादि-क्रमेण यथा जातानि, तथैव । तेन पृथ्वी तन्मात्रापञ्चके, आपश्चतुष्टये, तेजस्तत्त्रये, वायुस्तद्द्वये, व्योम शब्दतन्मात्रे, गन्धो रसतन्मात्रे, तथा उपस्थः पायौ, पायुः

---

रहता है । इस पाठ के अनुसार भी वास्तविक निहितार्थ में कोई अन्तर नहीं पड़ता । वरन् इसी तरह जैसे अप् तत्त्व तेज में विलीन हो जाता है, उसी तरह तेज भी अनिल में विलीन हो जाता है ॥२८४॥

इसी क्रम में वायु अम्बर में विलीन हो जाता है । अम्बर तन्मात्र में लीन होता हैं । जैसे क्रम से उत्पन्न हुए थे, उसी क्रम से विलीन भी होते हैं ॥२८५॥

सेन्द्रियतन्मात्रायें अहङ्कार में, अहङ्कार बुद्धि में और बुद्धि प्रधानतत्त्व रूप गहन त्रिगुण साम्य में विलीन हो जाती है । इसके बिलीनीकरण का जो क्रम है, वह बड़ा विचित्र है । इसे ध्यान पूर्वक समझना चाहिये ॥२८६॥

जहाँ तक गुण साम्य की बात है, यह पृथ्वी से बुद्धित्त्वपर्यन्त समस्त तत्त्वव्रात प्रकृति में विश्रान्त हो जाता है । इस अवस्था में सारा जग प्रगाढ निद्रा से मुग्ध घोर मूर्च्छा में बेहोश पड़ा रहता है ।

इस तरह प्रधान तत्त्व अपने, अनिर्देश्य, अप्रतर्क्य, अनौपम रूप में विद्य-मान रहता है । जैसे व्योम में सारे भूत अन्तर्हित रहते हैं उसके बाद ही वह सभी

पाणावित्यादिक्रमोऽनुसर्तव्यः । गहने इति प्रधानतत्त्वे । उपमैव औपमम् । इत्थं क्ष्मादिबुद्ध्यन्ते प्रकृतिविश्रान्ते सति तावदन्तमशेषं जगद्गाढनिद्रामूढमास्ते ॥२८७॥

इत्थं प्रकृत्यन्ते संहृते सति–

**परमाणुप्रमाणेन लीनं संतिष्ठते जगत् ।**

परमाणुना अत्यन्तमणीयसा परमपेलवेन च इन्द्रियाद्यगोचरेण रूपेण जगत् चराचरं प्रलीनमास्ते ।

यच्च प्रकृतितत्त्वनिविष्टानां रुद्राणां पूर्वोक्तकलनया आयुः, तत्–

**षड्विंशकस्य रुद्रस्य चैतद्दिनमिह स्मृतम् ।।२८८।।**

गुणतत्त्वेन सह प्रधानान्तं तत्त्वपञ्चविंशतिगतानां पञ्चविंशत्या प्रघट्टकैरवस्थितानां सर्वेषां रुद्राणां स्वामी श्रीकण्ठनाथ इह षड्विंशकोऽभिप्रेतः ॥२८८॥

अस्य–

**प्रजाः प्रजानां पतयः पितरो मानवैः सह ।**
**साङ्ख्यज्ञानेन ये सिद्धा वेदेन ब्रह्मवादिनः ।।२८९।।**
**छन्दः सामानि चोङ्कारो बुद्धिस्तद्देवताः प्रिये ।**
**अह्नि तिष्ठन्ति ते सर्वे परमेशस्य धीमतः ।।२९०।।**

प्रजाः प्रजायमानानि चतुर्दशविधभूतानि । पतयो भुवनेशाः । पितरो मन्वाद्याः । प्रजाग्रहणसङ्गृहीतानामपि मानवानां पुनरुपादानं वैचित्र्योत्थापककर्मकारित्वेन संसारे प्रधानत्वात् । साङ्ख्यज्ञानं प्रकृतिपुरुषविवेकप्रत्ययः । वेदेन ब्रह्मवादिन इति–

---

अन्तर्विश्रान्त तत्त्वों के साथ तन्मात्र और इसी तरह सभी में निहित सभी तत्त्व ऊपर ऊपर विश्रान्ति करते हुए प्रकृति में लीन हो जाते हैं ॥२८७॥

प्रकृत्यन्त संहार का यह वास्तविक चित्र है । उस समय यह जगत् अत्यन्त सूक्ष्म अणीयान् परमपेलव अर्थात् सुकुमारता-पूर्ण सूक्ष्मता में इन्द्रियाद्यगोचर रूप में चर और अचरमय समग्र जगत् प्रलीन रहता है ।

इस तरह प्रकृति तत्त्व में निविष्ट गुणतत्त्वों के साथ प्रधान पर्यन्त २५ तत्त्वों के रुद्रों के स्वामी २६ छब्बीसवें रुद्र श्री श्रीकण्ठनाथ का दिन प्रारम्भ होता है ॥२८८॥

चौदह प्रकार की सारी प्रजायें, प्रजाओं के अधिपति भुवनेश, पितर मानव ये सभी सांख्यज्ञान सिद्ध साधक और ब्रह्मवादी वैदिक, छन्द, साम, ॐकार बुद्धि और बुद्धि के देवता सभी श्री कण्ठनाथ के इसी दिन में अन्तर्लीन हो जाते हैं ।

'पुरुष एवेदं सर्वम्' । (ऋ० १०।९०।२)
इति ब्रह्म ये वदन्ति वेदान्तविदः । तद्देवता इति बुद्धितत्त्वगता ब्रह्माद्या देवयोनयः । परमेशस्येति भुवनाध्वनि वर्णितमाहात्म्यस्य अह्नि तिष्ठन्ति दिनारम्भेऽभिव्यज्यन्ते ॥२९०॥

किञ्चास्य–

**दिनान्ते ते प्रलीयन्ते**

पुनरपि च–

**रात्र्यन्ते विश्वसम्भवः ।**

अथ अव्यक्ततत्त्वस्थरुद्रसम्बन्धिदिनावधेर्मानुष्येण दिव्येन च अब्दमानेन कलयितुमशक्यत्वाद् बुद्धितत्त्वगतब्रह्मसम्बन्धिभिः प्रलयोद्भवैः सङ्कलना कर्तुमाह–

**षट्त्रिंशत्तु सहस्राणि ब्रह्मणां प्रलयोद्भवाः ॥२९१॥**
**अव्यक्ते च दिनं प्रोक्तं रुद्राणां तन्निवासिनाम् ।**

पूर्वोक्तनीत्या बुद्धितत्त्वर्ती ब्रह्मा गुणतत्त्वगतरुद्रदिनान्ते संह्रियते, तद्दिनारम्भे च अन्यः सृज्यत इति तदीयेऽब्दे सषष्टिशतत्रयं धीगतब्रह्मणां प्रलयोल्लासा भवन्ति । तावांश्च गुणतत्त्ववासिरुद्राणां जीवितावधिः । स च अव्यक्तनिष्ठरुद्राणां दिनकालः । तदिदं यदीदृगव्यक्तस्थरुद्राणां दिनमुक्तम्, तस्य च अवान्तर उच्यते ब्रह्माण्डप्रलयप्रधानप्रलयमध्यवर्ती जलादिगुणान्ततत्त्वविषयो विचित्रो यः संहार उक्तः, सोऽवान्तरप्रलयो मन्तव्यः ।

कस्तस्य प्रलयस्य तदन्ते च सृष्टेः कर्तेत्याह–

**तस्मिन्संहरते सर्वं प्रधानस्य दिनक्षये ॥२९२॥**

---

ब्रह्मवादी पुरुष को ही सब कुछ मानते हैं । बुद्धि तत्त्वगत देवता ब्रह्मा आदि माने जाते हैं । परमेश्वर रूप श्री श्रीकण्ठनाथ के भुवनाध्वा में वर्त्तमान दिन में ही अवस्थित रहते हैं । इनका यह सब स्थान कैसा होता है, इस सम्बन्ध में यह तन्त्र मौन है । क्षेमराज कहते हैं कि, अभिव्यज्यन्ते । किस रूप में अभिव्यक्त होते हैं– यह नहीं व्यक्त करते ॥२८९-२९०॥

भगवान् भी यही कहकर आगे बढ़ गये हैं कि, दिनान्ते ते प्रलीयन्ते । श्री कण्ठ के सौ वर्ष के बाद ये सभी उसी में प्रलीन हो जाते हैं । यह प्रलीनता भी यदि संहृति ही मानी जाय, तो कितनी विश्रान्तियाँ एक एक तत्त्व की होंगी ? क्योंकि पृथ्वी से प्रकृति पर्यन्त सारा जगत् ही तो विश्रान्ति की गाढ़ नींद में विलीन है । इसीलिये २८७ में स्पष्ट लिखा है कि गहने गुणसाम्ये प्रलीयते । रात्रि के अन्त में पुनः विश्व का समुद्भव हो जाता है ।

**राज्यन्ते च सृजेद्भूयः श्रीकण्ठो विश्वनायकः ।**

यथा च अस्य गुणमस्तकवर्तिनोऽपि विश्वनायकत्वम्, तथा दशमपटले वितत्य दर्शितम् ।

अथ–

**तस्याप्यनेन न्यायेन परिमाणस्थितिर्भवेत् ।।२९३।।**

**यस्मात्प्रलयकोट्यश्च व्यतीताश्च सहस्रशः ।**

अनेन न्यायेन स्थितिरिति सषष्टिशतत्रयदिनसङ्ख्याब्दशतावधिः । प्रलयकोट्य इति अधोवर्तितत्त्वतत्त्वेशगताः ।

---

ऊपर की अव्यक्त तत्त्व पर्यन्त तत्त्व कलना में लौकिक और दिव्य वर्षों के अनुसार यदि काल की कलना कोई करे–यह असम्भव है । इसीलिये बुद्धितत्त्वगत ब्रह्मा के प्रलयों और उद्भवों की संकलना करते हुए कह रहे हैं कि,

बुद्धितत्त्ववर्त्ती ब्रह्मा, गुततत्त्वगत रुद्र दिनान्त में संहृत हो जाते हैं । उसके दिनारम्भ में अन्य का सृजन हो जाता है । इस तरह उस रुद्र के दिन में बुद्धिगत ब्रह्मा के ३६० प्रलय और उल्लास होते हैं । गुणतत्त्वगत रुद्रों का जीवन भी उतना ही है । यह अव्यक्त निष्ठ रुद्रों का दिन काल माना जता है । इस गणना के कुल योग के अनुसार ३६हजार बार ब्रह्मा का प्रलय और उद्भव हो जाता है । गुण-तत्त्वगत वहाँ के निवासी रुद्रों का वह दिन होता है । प्रधान के दिन के क्षय हो जाने पर सारा का सारा उल्लास उसी में संहृत हो जाता है । रात्रि के अन्त में विश्वनायक श्रीकण्ठनाथ पुनः सारा सृजन अपनी स्वातन्त्र्य शक्ति के माध्यम से कर लेते हैं । इस श्रीकण्ठनाथ की प्रलय और स्थिति का परिमाण भी दिव्य वर्षों की कलना के अनुसार ही होती है अर्थात् तीन सौ साठ दिव्य दिनवत् अब्दसंख्या शतावधि ही स्थिति और इतना ही प्रलयावस्थान ।।२९१-२९३।।

इस तरह अधोधः वर्त्तमान तत्त्वों और तत्त्वेशों के प्रलय की संख्या भी हजार में ही कही जा सकती है । इसी अर्थ को प्रलय कोटिशब्द के साथ समन्वित किया गया है । इसी अवधि में प्रातिलोम्य क्रम से नियति काल में नियति काल राग में, नियतिकालराग विद्या में और ये सभी अन्त में कला में क्रमशः विलीन होते हुए विश्रान्त हो जाते हैं । इनका मान भी सभी रुद्रों की शतवार्षिकी आयु के आधार पर ही निर्धारित है । युगपत् प्रलय की यह विस्मयजनक विश्रान्ति ध्यान देने योग्य है ।

इस सम्बन्ध में पहले कहा गया है कि,

एतदवध्यन्ते च–

**ततो नियतिकालौ च रागो विद्या कला तथा ।।२९४।।**

**परस्परं लयं यान्ति क्रमात्सर्वे स्वमानतः ।**

तत इति श्रीश्रीकण्ठीयाधिकारसमाप्तौ । क्रमादिति कलाद्यानुलोम्यक्रमेण यत् कञ्चुकपञ्चकं देशवैचित्र्येण अवस्थितम्, तद् नियत्यादिप्रातिलोम्यक्रमेण चूर्णपाषाणजलवत् परस्परं लीयते । स्वमानत इति कञ्चुकवासिसर्वरुद्रसम्बन्धिशतवर्षान्ते । अनेन च एतद्दर्शितं यत्सर्वेषां कञ्चुकवासिनां सपुंस्तत्त्वरुद्राणां युगपदेव च प्रलय इति । तथा च पूर्वं तेषाम्–

'तस्मात्कला समुत्पन्ना विद्यारागौ तथैव च ।

कालो नियतितत्त्वं च पुरुषः प्रकृतिस्तथा' ॥ (११।६४)

इति सृष्टिरपि युगपदेव उक्ता । भुवनादिदेशव्यवस्था तु पृथगिति तदाशयेन क्रमात्सर्वे इति इह उक्तम् ।

तदित्त्थम्–

**कलाद्यवनिपर्यन्तं गहनेशदिनक्षये ।।२९५।।**

**नानाभुवनविन्यासरचनादिविभूषितम् ।**

**सगुणाधारपर्यन्तरुद्रक्षेत्रज्ञसङ्कुलम् ।।२९६।।**

**गहनेशे लयं याति मूलप्रकृतिकारणे ।**

गहनेशो मायातत्त्वगः आद्यो रुद्रः । रचनादीति आदिशब्दाद्विभवः ।

'अधश्छादनमूर्ध्वं च रक्तं शुक्लं विचिन्तयेत् ।

मध्ये तमो विजानीयाद्गुणास्त्वेते व्यवस्थिताः' ॥ (२।६६)

---

'इससे कला उत्पन्न हुई । फिर विद्या और राग साथ ही काल और नियति तत्त्व पुनः प्रकृति और पुरुष साथ ही उत्पन्न हुए । तत्त्वों के साथ भुवन आदि देश व्यवस्था तो अलग की बात है । इसीलिये श्लोक में क्रमात् सर्वे' शब्द का प्रयोग किया गया है ॥२९४॥

इस तरह कला कञ्चुक से पृथ्वी पर्यन्त गहनेश के दिन में उल्लसित और दिनक्षय में गहनेश रूप शूल प्रकृति के भी कारण रूप रुद्र में विलीन हो जाते हैं । कला और पृथ्वी के अन्तराल के भुवनों और इनमें भी नाना अन्य भुवनों का विन्यास उनकी विचित्र संरचनायें, सभी उल्लसित रहते हैं किन्तु उनकी सारी संरचना के साथ उनका अस्तित्व समाप्त हो जाता है । इनके सारे गुण, उनकी संकुलता क्षेत्र और क्षेत्रज्ञता की मूल प्रकृति के कारण गहनेश में विश्रान्ति हो जाती है ।

इति पूर्वोक्तनीत्या आधारो माया, स पर्यन्ते यस्य तद् गुणाधारपर्यन्तं कलातत्त्वं सहगुणाधरपर्यन्ता ये रुद्रक्षेत्रज्ञास्तैः सङ्कुलम् । गहनेशे इति गहन ईशः प्रभुर्यस्य, तस्मिन् गहनेशे मायातत्त्वे मूलप्रकृतेः प्रधानस्यापि कारणे ।

तच्च तथालीनं सत्–

**रात्र्यन्ते जायते भूयो गहनेशप्रचोदनात् ।।२९७।।**

तदित्थमस्य–

**अहोरात्रस्त्वयं प्रोक्तं प्राकृतः परमेश्वरि ।**

प्रकृतिरिह विशेषाचोदनात् कलादिक्षित्यन्तस्य विश्वस्य कारणं माया उच्यते, तस्या अयं प्राकृतो मायीयः ।

तद्गतश्च यो रात्रिकालः–

**प्रलयश्च स एवोक्तो भूतानां परमेश्वरि ।।२९८।।**

कलातत्त्वान्तानां सर्वेषां प्रकृष्टचिरतरकालानामधस्तनकालापेक्षया कलयितुमशक्यत्वात् प्राधानिककालमवधिं कृत्वा कलयितुमाह–

**प्राधानिकपरार्धेन दशधा गुणितेन तु ।**
**माया संहरते सर्वं पुनश्चैव सृजेज्जगत् ।।२९९।।**

प्रधानस्य अयं प्राधानिकः कालः, तस्य यत् परार्धं पूर्वोक्तः सङ्ख्याविशेषस्तेन । दशधा गुणितेनेति दशपरार्धगुणितेन प्राधानिककालेन मायाया दिनम्, रात्रिश्च तावती भवतीत्यर्थः । एतदुक्तं भवति–प्रधानाधिष्ठातृरुद्रायुष्कालो यः कञ्चुकनिवासिनां दिनम्, तत् सषष्टिशतत्रयकलितमब्दस्तच्छतेन तदायुरिति अत्र न ईदृशी कलना क्रियते; अपि तु स कञ्चुकवासिदिनात्मा प्राधानिकः कालः परार्धदशकेन

---

श्लोक २।६६ में उक्त संरचनाओं की चर्चा है पुनः गहनेश की प्रेरणा से ही रात्रि के अन्त में उत्पन्न हो जाते हैं ॥२९५-२९७॥

भगवान् कह रहे हैं कि, प्रिये ! कला से पृथ्वी पर्यन्त विश्व की कारण रूप माया है । उसका यह प्राकृत अर्थात् मायीय अहोरात्र है । इसमें आने वाला रात्रिकाल ही इसके प्राणियों का प्रलय काल होता है ॥२९८॥

प्रधान के काल को प्रधानिक काल कहते हैं । इस काल का परार्ध काल जो पहले ही उक्त है, उसे दश से गुणा करने पर अर्थात् दश गुणा परार्ध काल प्राधानिक काल है । यही माया का दिन है । इतनी ही बड़ी माया की रात भी होती है ।

गुणितः कञ्चुकवासिनामायुः, तच्च गहनिकं दिनमित्ययमत्र पूर्वतो विशेषो दर्शितः । इत्थं च परार्धदशकगुणितो यः प्राधानिककालस्तस्य शततमो भागः कञ्चुकवासिनां वर्षम्, तस्यापि षष्ट्यधिकत्रिशततमो भागोऽत्र दिनमिति, इत्थमत्र वर्षदिनादिव्यवस्था कार्या ॥२९९॥

एवमुक्तपरार्धदशकगुणितं तद् गहनेशदिनम्, तत्कलनया वर्षम्, तच्छतरूपो यो गहनेशावस्थितिकालः, स एव तदाश्रयस्य मायातत्त्वस्य कालः । तमवधिं कृत्वा ईश्वरतत्त्वाधिष्ठातुरीश्वरस्य दिनपरिमाणं दर्शयितुमाह–

**मायाकालपरार्धस्य शतधा गुणितस्य च ।**
**ईश्वरः कुरुते सृष्टिं पुनश्च संहरेज्जगत् ॥३००॥**

अत्रापि मायाया योऽवस्थितिकालस्तस्य यत् परार्ध तस्य शतधा गुणितस्येति परार्धशतसङ्ख्यातस्य । तावत्कालमीश्वरः सृष्टिं स्वदिने, संहारं स्वरात्रौ शुद्धविद्यातत्त्वान्तस्य विश्वस्य करोतीत्यर्थः । शतधा गुणितस्येत्युक्तेरयमाशयः– यत्किल मायावधिः कालः परार्धैर्दशभिर्गुणितो विद्यातत्त्वाधिपतेरनन्तनाथस्य अधिकारकालः, तत्रापि पूर्ववद्भागकलनया वर्षदिनप्रविभागो ज्ञेय इत्येवंविधो योऽनन्तनाथाधिकारकालः, सोऽपि परार्धदशकगुणित ईश्वरस्य दिनमिति । अत्रापि उक्तक्रमानुसारिवत्सरतच्छतात्मा ईश्वराधिकारकालः ॥३००॥

---

आचार्य क्षेमेन्द्र के अनुसार गणना को प्राधानिक काल कञ्चुक वासियों का दिन होता है । यह दश परार्ध से गुणित होने पर कञ्चुक वासियों की आयु होती है । यही वस्तुतः गहनेश का दिन है । इसी में माया इस विश्व प्रसार का संहार करती है और गहनेश पुनः समग्र जगत् को अभिव्यक्त कर लेते हैं ॥२९९॥

यह गहनेश का दिन होता है । माया काल परार्ध के शत गुणित करने पर जितनी काल सीमा होती है, वही इस दिन की भी काल सीमा होती है । परार्ध शत संख्यात ही दिन होता है । तब तक ईश्वर अपने दिन में सृष्टि करते हैं । तथा अपनी रात में इसका संहार कर लेते हैं । शुद्धविद्यातत्त्वान्त सृष्टि का ही संहार इसमें होता है ।

माया का काल दश परार्ध और इतना ही काल विद्या तत्त्व के अधिपति अनन्तनाथ का होता है । अनन्तनाथ का जो अधिकार काल है, उतना ही परार्ध का दश गुणा ईश्वर का दिन है । ईश्वर का अधिकार काल परार्धशतकाल ही है ॥३००॥

सोऽपि प्रक्रान्तरीत्या परार्धशतगुणितः सदशिवनाथस्य दिनमिति तदन्तेऽसावधोवर्ति विश्वं संहरतीत्याह–

**ततः सदाशिवो देवः स्वमानेन च संहरेत् ।**
**सृजते च पुनर्भूय आत्मीये देव्यहर्मुखे ।।३०१।।**

स्वामानेनेति अवतरणिकायामेव व्यख्यातम् । पुनर्भूयः भूयोभूय इत्यर्थः ।।३०१।।

तदित्थम्–

**महाप्रलय एवोक्तः सादाख्ये तु दिनद्वये ।**

पूर्वोक्तमायीयप्रलयापेक्षया अयं महान् शुद्धाध्वनोऽपि संहरणात् । अनेन च परिमाणेन अयमपि स्ववर्षशतान्ते–

**बिन्दुतत्त्वे लयं याति पञ्चमन्त्रमहातनुः ।।३०२।।**

बिन्दुतत्त्वे इत्यभिधानात्तदधोगतो भुवनाध्वा प्रतिपादितः, स्थूलः सदाशिवोऽत्र विवक्षितः । बिन्दुतत्त्वे लयं याति बिन्द्वीश्वररूपतामाविशति ।।३०२।।

तथाविधश्चासौ–

**बिन्दुं चैवार्धचन्द्रं तु भित्त्वा चैव निरोधिकाम् ।**
**नादतत्त्वे लयं याति गृहीत्वा सचराचरम् ।।३०३।।**

बिन्द्वर्धचन्द्रनिरोधिकाभूमीः क्रमात्क्रमं परार्धशतगुणितपरिमाणदिनादिव्यवस्थाकलितावस्थितीराविश्य स्थूलः सदाशिवभट्टारको नादात्मनि सूक्ष्मे सदाशिवपदे लीयते तदात्मा जायत इत्यर्थः ।।३०३।।

---

यही स्थिति सदाशिव की भी है । परार्धशत गुणित सदाशिव का दिन होता है । ये अपने दिन में अधोवर्त्ती विश्व का संहार और अहर्मुख में पुनः सृजन प्रक्रिया भी पूरी करते हैं ।।३०१।।

मायीय प्रलय की अपेक्षा इसका प्रलय महा प्रलय माना जाता है । क्योंकि इसके प्रलय में शुद्धाध्वा का भी संहार होता है । अपने सौ वर्ष पूरा करने पर सदाशिव बिन्दुतत्त्व में लीन हो जाते हैं । वस्तुतः सदाशिव का यह स्थूल स्वरूप माना जाता है । उस समय ये पञ्चमन्त्र के व्यापक शरीर वाले होते हैं । बिन्दुतत्त्व में लय होने का अर्थ बिन्द्वीश्वररूपता में प्रवेश कर जाते हैं ।।३०२।।

इस अवस्था में बिन्दु, अर्धचन्द्र और निरोधिका का भेदन कर नादतत्त्व में वे लीन हो जाते हैं । यह सूक्ष्म सदाशिव तत्त्वात्मक स्थिति होती है । उस समय सदाशिव तत्त्व में सचराचर विश्व का भी विलय हो जाता है । इसीलिये वे सबसे युक्त रहते हैं ।।३०३।।

सोऽपि च–

**नादः सौषुम्नमार्गेण भित्त्वा ब्रह्मबिलं प्रिये ।**
**शक्तितत्त्वे लयं याति शक्तितत्त्वदिनक्षये ।।३०४।।**

नादात्मा सूक्ष्मः सदाशिवनाथः पूर्वोक्तकलनागणितसुषुम्नेशदिनान्ते तद्रूपतां श्रित्वा तथैव तदवधिकालगणनागणितब्रह्मेशदिनान्ते ब्रह्मरन्ध्रस्थब्रह्मरूपतां श्रित्वा तदीयावस्थितिकाले तथैव गणिते यच्छक्तितत्त्वस्थदेवतादिनम्, तदन्ते तन्मयी-भवतीत्यर्थः ।।३०४।।

**परार्धः स तु विज्ञेयः कालस्तु वरवर्णिनि ।**

पूर्वम्–

'प्राधानिकपरार्धेन दशधा गुणितेन च' । इति । (११।२९९)

तथा–

'मायाकालपरार्धस्य शतधा गुणितस्य च' । (११।३००)

इत्युक्तत्वात् शक्तितत्त्वदिनान्तात्मा कालः परार्धपरार्धात्मा अतिविततसङ्ख्यो विज्ञेयः, न तु एकपरार्धमात्ररूपः पूर्वोक्तव्याघातापत्तेः । तथा हि भुवनाध्वनि तत्त्वानामुत्तरोत्तरे देशप्रमाणे प्रकर्ष उक्तस्तथेह स्थित्यादिकालोऽप्युत्तरोत्तरं प्रकृष्यत एवेत्यस्य ग्रन्थस्य तात्पर्यम् । इत्थं परार्धपरार्धमानं शक्तिदिनम्, तावत्येव च तदीया रात्रि-रनया कलनया यद्वर्षशतम्, तदन्ते शक्तितत्त्वाधिष्ठातृसूक्ष्मदेवताधिकारपरि-समाप्तिः ।

---

नाद सुषुम्ना के मार्ग से ब्रह्मबिल को विद्धकर शक्तितत्त्व में विलीन हो जाता है । यह नाद सूक्ष्म सदाशिवनाथ रूप होता है । इस क्रम में सुषुम्नेश, ब्रह्मेश का भी भेदन होता है । इसमें ब्रह्मरन्ध में ही ब्रह्मेश का अवस्थान होता है । सुषुम्नेश और ब्रह्मेश भेदन में भी पूर्वोक्त अवधि के अनुसार काल गणना की जाती है । इसके बाद ही शक्तितत्त्व का दिन प्रारम्भ होता है । शक्तितत्त्वस्थ देवता के दिनान्त में यह तन्मयी भाव मानना चाहिये ।।३०४।।

शक्तितत्त्व के दिन की अवधि के विषय में कह रहे हैं कि, यह काल भी परार्ध काल ही होता है । ११।२९९-३०० के अनुसार प्राधानिक परार्ध और माया काल परार्धशत गुणित होता है । इस क्रम में शक्ति तत्त्व परार्ध परार्धकाल का होता है । एक परार्ध मात्र नहीं होता । यह मानने पर उक्त एकादश पटल की उक्तियों में व्याघात उत्पन्न हो जायेगा । यहाँ भुवनाध्वा के उत्तरोत्तर प्रकर्ष की अपेक्षा यहाँ भी स्थित आदि काल में उत्तरोत्तर प्रकर्ष की पूर्त्ति मानी जाती है । इस तरह परार्ध परार्धशक्ति का दिनमान माना जाता है । इस दिनान्त में शक्तितत्त्वस्थ

**तच्च शिवतत्त्वस्थस्य व्यापीशस्याप्यहर्मुखम् ।।३०५।।**

तत्र असौ–

**ततश्च संसृजेद्भूयो व्यापी व्योमस्वरूपिणि ।**
**लीयते सोऽप्यनन्तेशे सोऽनाथे सोऽप्यनाश्रिते ।।३०६।।**

स्वाधिकारपरिसमाप्तौ लीयते ।।३०६।।

अथ अस्य अनाथान्तविश्वाश्रयस्य अनाश्रितनाथस्य कियद्दिनं स्यादित्याह–

**शक्तिकालपरार्धस्य कोटिधा गुणितस्य च ।**
**अनाश्रितस्य देवस्य दिनमेतत्प्रकीर्तितम् ।।३०७।।**

यः परार्धपरार्धात्मा शक्तिकाल उक्तस्तस्य प्रकरणात् परार्धकोटिगुणितस्य यः कालः, तदनाश्रितस्य दिनम् ।।३०७।।

अथ–

**अनेन परिमाणेन परार्धगुणितेन तु ।**
**सोऽपि याति परं स्थानं कारणं स्वमनाश्रयम् ।।३०८।।**

परार्धपरार्धरूपो यः शक्तिकालः परार्धकोट्या गुणितोऽनाश्रितदिनात्मा, सोऽपि परार्धेनेति परार्धपरार्धेन गुणितोऽनाश्रितस्य अधिकारकाल इति तच्छतभागतत्स-षष्टित्रिशतभागाकर्षणादस्य वर्षदिनव्यवस्था प्राग्वदनुसरणीया । तदित्थमतिविततकालाध्वगतस्वाधिकारकालपरिसमाप्तावनाश्रितनाथः स्वमनाश्रयं कारणमिति–

---

देवताधिकार की परिसमाप्ति हो जाती है । यही शिवतत्त्व में व्याप्त व्यापीश देव का अहर्मुख होता है ।।३०५।।

व्यापीश, व्योमेश में,व्योमेश अनन्तेश में, वह अनाथ में और अनाथ अनाश्रित में विलीन होकर विश्रान्ति प्राप्त करते हैं । अपने अपने अधिकारों की परिसमाप्ति पर ही इस प्रकार का विलय होता रहता है ।।३०६।।

अनाथान्त विश्व का आश्रय अनाश्रित ही माने जाते हैं । अनाश्रितनाथ की कालावधि तो कल्पनातीत है । शक्ति का काल परार्ध परार्ध रूप होता है । इसमें परार्धकोटि गुणा करने पर जो काल है, वही अनाश्रित नाथ का काल माना जाता है ।।३०७।।

परार्ध परार्ध रूप शक्ति का काल और परार्धकोटि गुणित अनाश्रित भट्टारक का काल और वह भी परार्ध परार्ध गुणित होने पर अनाश्रित का अधिकार काल होता है । इसमें ३५६० भाग के आकर्षण से इसके वर्ष दिन के काल की अवधि होती है । इस प्रकार अपने अधिकार काल की समाप्ति पर अनाश्रित नाथ अपने

'अत्रारूढस्तु कुरुते शिवः परमकारणम् ।

सृष्टि..................................'॥ (१०।१२५८)

इत्याद्युक्तनीत्या परमशिवमेव, तिष्ठति अस्मिन्विश्वमिति व्युत्पत्त्या स्थानं याति तदेकात्मा भवति ॥३०८॥

यश्च अयमियतीमतिविततविततामध्वधारामधिरूढः–

**स कालः साम्यसंज्ञश्च**

यथा गुणानां साम्यं प्रधानम्, तथा सर्वेषां सृष्टिस्थितिसंहारक्रियाकलनाभासानां यत् साम्यं प्रकर्षापकर्षशून्यं वपुः, तत् साम्यं ज्ञेयम् । समताश्रयः साम्येन, कल्यमानत्वादेव च कालशब्देन उक्तः ।

वैषम्यनिवृत्त्यात्मकसाम्यात्मकत्वादेव च अयम्–

**जन्ममृत्युभयापहः ।**

समापन्नस्येत्यर्थः । अथ–

**ततोऽप्यूर्ध्वममेयस्तु कालः स्यात्परमावधिः ॥३०९॥**
**नित्यो नित्योदितो देवि अकल्यश्च न कल्यते ।**

साम्यसंज्ञः कालः प्रशान्तनिःशेषवैषम्यात्मतया कल्यमानत्वात् प्रमेयस्तथा नायम्, अत एव परमोऽवधिः सर्वप्रमेयप्रमात्रादिप्रतिष्ठापदमुन्मनापरतत्त्वसामरस्यात्मपरप्रमातृरूप इत्यर्थः । चो ह्यर्थे । यतो न कल्यते, अत एव अकल्यः ।

---

अनाश्रय कारण अर्थात् परम कारण रूप शिव सद्भाव को प्राप्त कर लेते हैं । अर्थात् उसी परमतत्त्व में विश्रान्ति लाभ करते हैं । अर्थात् तदात्मा हो जाते हैं ॥३०८॥

इस काल की अप्रकल्प्य कलना को अतिविततवितता प्रकल्पना कह सकते हैं । इस अध्वधारा के उच्चशिखर पर अधिरूढ उस काल को कालसाम्य की संज्ञा दी जा सकती है । जैसे गुणसाम्य को प्रधान कहते हैं, उसी तरह सभी सृष्टि, स्थिति, संहार क्रिया कलाप कलना के आभास का जहाँ साम्य हो जाय, वह प्रकर्षापकर्ष शून्य स्थिति मानी जा सकती है ।

वह क्रिया-साम्य माना जाता है । साम्य से साम्यत्व का स्वयम्, आश्रय बनाने वाला वह परम सूक्ष्मवपुष परमशिव ही ऐसा आश्रय हो सकता है । यद्यपि वह काल शरीर नहीं रह गया होता है, फिर भी कल्यमान होने के कारण ही काल शब्द के द्वारा अभिहित किया जा रहा है ।

यहाँ वैषम्य की उत्तरोत्तर परमनिवृत्ति और साम्य की सर्वतोभावेन प्रतिष्ठा हो गयी होती है । इसलिये वह क्रिया-साम्य है । काल साम्य है और सर्वसाम्य

कथं तर्हि कालशब्दोऽत्र प्रवृत्त इत्याह–

**स चाधः कलयेत्सर्वं व्यापिन्यादिं धरावधिम् ।।३१०।।**

**तुट्यादिभिः कलाभिश्च देव्यध्वानं चराचरम् ।**

साम्यसंज्ञं कालं भित्तिभूतमवधिमाश्रित्य तदुद्भुतं व्यापिन्यादिं सर्वमिति धरान्तमध्वानं यतः कलयत्यन्तः प्रकाशैकात्म्येन स्थितं बहिर्वैचित्र्यशतैः प्रक्षिपति, बहिराभासितं च अन्तः क्षिपति नानात्वेन च परिगणयति, यत एव कलयति ततोऽयं कालं उच्यत इत्यर्थः ।

एतदेव अधिकावापेन अनुवदन्नुपसंहरति–

**ऊर्ध्वमुन्मनसो यच्च तत्र कालो न विद्यते ।।३११।।**

**न कल्यः कल्यते कश्चिन्निष्कलः कालवर्जित ।**

**यः शाङ्कर्युन्मनातीतः स नित्यो व्यापकोऽव्ययः ।।३१२।।**

उन्मनसः सम्बन्धि ऊर्ध्वं परतत्त्वात्मकं यत्पदं तत्र कलनाहेतुः कालो नास्ति यस्मान्न तत्र कल्यः कलनार्हः कोऽपि सर्वस्य तत्र परमशिवैकात्म्येनैवावस्थितेः । यतश्चायमप्रमेयत्वात्तुट्यादिकलाभ्यः कालावयवरूपेभ्यो निष्क्रान्तस्तेन क्रमाद्यव-

---

है । यह काल साम्य समस्त वैषम्य की समाप्ति के कारण मेय नहीं रह जाता । इसलिये इसे अमेय कहते हैं । वह परम अवधि है क्योंकि वहाँ प्रमेयप्रमाता आदि प्रतिष्ठापद एक हो जाता है ।

इस भूमि को उन्मना भूमि कह सकते हैं । कलना न होने के कारण यह अकल्य अवस्थान हो जाता है । इसे इस अवस्था में भी काल कहने का कारण यह है कि, यह व्यापिनी से लेकर धरान्त अध्वा का स्वात्मान्तराल में अभी कलन करता है । अन्तः प्रकाशैकात्म्य से स्थित होने पर भी वह शत शत वैचित्र्यों से व्यापृत है ।।३०९-३१०।।

तुटियों से, कलाओं से सचराचर अध्वा के अन्तःकलन के कारण भी यह काल है । जब उत्तरोत्तर उत्कर्ष पर पहुँच कर यह साम्य उन्मना का स्पर्श कर लेता है, उस समय वहाँ काल का कलेवर गल जाता है । सारी कलना समाप्त होकर नैकल्य में समाहित हो जाती है ।।३११।।

उन्मना परतत्त्वात्मक पद है । वहाँ कलना का कारण काल नहीं रहता । कल धातु की सक्रियता वहाँ समाप्त हो जाती है । वहाँ कोई काम्य नहीं । कोई कलंक नहीं । निष्कल और कालवर्जित, क्रमाध्व भास वर्जित एक अद्भुत अव्यय नित्य शाश्वत पद है । वह तत्त्व इस शाङ्करी उन्मना को भी अतिक्रान्त कर जाने वाला परम तत्त्व है ।

भासात्मककालवर्जितः, तद्रूपो न भवति केवलं प्रोक्तव्याख्यासतत्त्वविश्वकलनाकारित्वात्काल इत्युक्तः । अव्यय इति अपरिक्षीयमाणमूर्तिः । उक्तं च योजनिकायाम्–

'सर्वकालं तु कालस्य व्यापकः परमोऽव्ययः ।
उन्मनान्ते परे योज्यो न कालस्तत्र वर्तते' ॥ (४।२८७)

इति ॥३१२॥

यस्मात्–

**तस्यादौ यादृशं रूपं कल्पान्ते चैव तादृशम् ।**

आदौ सृष्टिकाले । किञ्च–

**अरूपो रूपनिर्मुक्तः सोऽनादिर्भववर्जितः ॥३१३॥**
**सर्वज्ञः सर्वकर्ता च दानादिगुणवर्जितः ।**

रूप्यन्त इति रूपाणि देशकालाकारनियमा न विद्यन्ते यस्य, अत एव रूपेभ्य इदमीदृगित्यादिरूपव्यापारेभ्यो निर्मुक्तः, यतोऽनादिस्तत एव भवेनोत्पादेन वर्जितोऽसंस्पृष्टः । सर्वज्ञ इति प्राग्वत् । सर्वेण रूपेण कर्ता सर्वात्मना स्वतन्त्रः । चकारो ज्ञत्वकर्तृत्वयोः सामरस्यमाह । यश्च व्यतिरिक्ते ज्ञेये कार्ये ज्ञाता कर्ता च, असावनादिभिः प्रवाहनित्यतया वर्तमानैर्गुणैर्मायाधर्मैर्युक्तो भवति । अयं तु अभेदसर्वज्ञसर्वकर्तृत्वात्मकत्वात्तैरसंस्पृष्टः ।

एवमपि ततो नान्यत्किञ्चिदस्ति; अपि तु–

**स एवापररूपेण**

स्वस्वातन्त्र्यात्स्फुरन्नपि–

**उन्मन्या मूर्ध्नि संस्थितः ॥३१४॥**

---

योजनिका प्रकरण में पटल ४।२८७ में कहा भी गया है कि, काल की सर्वकलना का साम्य भाव भव्य, व्यापक और परम अव्यय तत्त्व है, वह उन्मना को भी अतिक्रान्त कर अवस्थित है । वहाँ काल नहीं होता ॥३१२॥

उसके आदि में जो रूप होता है, कल्पान्त में भी वह वही रूप रहता है । इसलिये देशकाल से उत्पन्न पारिस्थितिक आकार के अभाव में किसी तरह निरूपित न रहने के कारण वह अरूप कहलाता है । वह रूप व्यापारों से निर्मुक्त है । अनादि है और उत्पत्ति के आधार रूप भव की भूति से रहित है । ज्ञत्व और कर्तृत्व के सामरस्य के कारण सर्वज्ञ और सर्वकर्तृत्व सम्पन्न है । अत, सबसे असंसृष्ट परम शिवरूप ही हैं ॥३१३॥

वही सर्वातीत अव्यय तत्त्व स्वात्म स्वातन्त्र्य के सर्वातियायी प्रभाव से अपर रूप से स्फुरित होते हुए उन्मना के शिखर भाग पर अवस्थित होता है ॥३१४॥

अतश्चायम्-

**देवदेवो जगन्नाथः परमात्मा शिवोऽव्ययः ।**

**पूर्वानुक्रमयोगेन सोऽकामात्सृजते जगत् ।।३१५।।**

जगता कालाग्न्यादिशिवान्तेन नाथ्यत इति जगन्नाथः । पूर्वानुक्रमयोगेनेति समनापदमारुह्य तत्तत्कारणमूर्त्याश्रयणेनेत्यर्थः । अकामादित्थमिदमेवमहं करोमीति सङ्कल्पं विना । शिष्टं प्रागेव व्याख्यातप्रायम् ॥३१५॥

अकामादित्याक्षिपन्ती श्रीदेवी उवाच-

**अकामस्य क्रिया नास्ति निष्क्रियश्च सृजेत्कथम् ।**

**एतं प्रश्नवरं गुह्यं कथयस्व प्रसादतः ।।३१६।।**

सर्वा गमनपचनादिक्रिया सङ्कल्पपूर्वा, सङ्कल्पश्च चिदानन्दघने भगवति नेष्टः, तत्कथमक्रियस्य स्रष्टृत्वम्, अथ च चित्प्रकाशात्मकपरमेश्वरस्वरूपव्यतिरिक्तस्य अन्यस्य सत्त्वमेव न घटते किमङ्ग कर्तृत्वम् । अत एव प्रश्नानां मध्ये वरमुत्कृष्टं प्रश्नमेतन्निर्णयाच्च सर्वसंशयोच्छित्तिर्भवति प्रसादतस्तत्त्वार्थोन्मीलनेन कथयेति एतन्निर्णयमादिश ॥३१६॥

इत्थं पृष्टः श्रीभैरव उवाच-

**आदित्यस्य मणेर्यद्वत्तापिताद्रविरश्मिभिः ।**

**वह्निः संजायते तस्माद्रवेस्तत्र न कामिता ।।३१७।।**

---

इसलिये यह देवाधिदेव देवाराध्य, कालाग्नि से शिवपर्यन्त सबके द्वारा सनाथ बनाने के लिये प्रार्थ्यमान होने के कारण जगन्नाथ परमात्मा अव्यय शाश्वत शिव पूर्वानुक्रम योग से समना पद पर आरूढ आरोहण-कारणमूर्त्ति का आश्रय लेने के कारण आराध्य परमेश्वर, विना करने के संकल्प के ही जगत् की सृष्टि करता है ॥३१५॥

श्री देवी कहती हैं-भगवान् ! अकाम की तो कोई क्रिया होती ही नहीं, तथा जो निष्क्रिय है वह सक्रिय हो ही नहीं सकता । ऐसी अवस्था में भगवान् यह बताने का कष्ट करें कि, इस सृष्टि संरचना का रहस्य क्या है । विना क्रिया के यह प्रक्रिया कैसे रूप ग्रहण कर सकी ? क्रिया के विषय में चिदानन्दघन परमेश्वर में संकल्प हो भी कैसे सकता है ? अक्रिय में स्रष्टृत्व कैसे ? भगवान् ! इस तत्त्वार्थ का उन्मीलन कर हमें कृतार्थ करें ॥३१६॥

भगवान् कहते हैं कि, देवि ! सूर्यकान्तमणि, रविरश्मि से तृप्त होकर आग उत्पन्न कर देता है । उसमें उसका कोई प्रयोजन या संकल्प नहीं होता । आग उसमें उत्पन्न हो जाती है किन्तु सूर्य की उसमें कोई इच्छा नहीं होती ।

**मणेरपि न कामित्वं तद्वद्दैवस्य चेष्टितम् ।**

यः किल कुम्भकारादिः स्वव्यतिरिक्तं कार्यं किमपि प्रयोजनमुद्दिश्य जनयति, तस्य सङ्कल्पं विना तत्पूर्वकक्रियानुदयान्मा भूत् कर्तृत्वम्, परमेश्वरस्य स्वतन्त्र-भट्टारकस्य इदमेव परमेश्वरत्वं यदयम्–

'सृष्टिसंहारकर्तारं................'। (१।३)

इत्याद्युक्तनीत्या स्वचिद्भित्तौ स्वातन्त्र्यशक्त्या दर्पणनगरवत् स्वानतिरिक्तमपि अतिरिक्तमिव शिवादिक्षित्यन्तमनन्तावान्तरवैचित्र्यचित्रितमाभासयंस्तावदशेषचमत्कारात्म-कपूर्णानन्दघनस्वभाव एवेति वस्तुस्वभावमात्रसाम्येन सूर्यसंस्पृष्टसूर्यकान्तोत्थवह्निरत्र दृष्टान्तः ।

तदाह–

**आदित्यवच्छिवो ज्ञेयः शक्तिर्मणिरिव स्थिता ।।३१८।।**

न तु जाड्यं भिन्नत्वं च दार्ष्टान्तिके शङ्कनीयं दृष्टान्तदार्ष्टान्तिकयोः सर्व-साधर्म्यायोगात् ।

किञ्च–

**ऋतुकालमिताद् वृक्षात्कालोऽङ्कुरनियोजकः ।**
**यद्वच्छिवसमायोगात्तद्वच्छक्तेर्जगत्स्थितिः ।।३१९।।**

---

इसी तरह परम स्वतन्त्र स्वतन्त्रभट्टारक परमेश्वर का यही पारमैश्वर्य है कि, उसकी अपनी चिद्भित्ति में स्वातन्त्र्य शक्ति से ही दर्पण नगर की तरह अनतिरिक्त रहते भी अतिरिक्त की तरह यह भासित हो जाती है । भगवान् कहते हैं कि, देवि ! उसी तरह अशेष चमत्कारों के चाकचिक्य से पूर्णानन्द स्वभाव ही यह स्पन्द साकार हो उठता है ।

अतः उसी आदित्य की तरह ही यह शिव भी है । मणि की तरह ही उसकी शक्ति है । जिससे यह सब कुछ हो जाता है । इस दृष्टान्त में जड़ता और मणि की भिन्नता आदि दार्ष्टान्तिक में कमी की बात नहीं सोचनी चाहिये । दृष्टान्त और दार्ष्टान्तिक में सर्वधर्म साम्य या साधर्म्य नहीं होता ॥३१७-३१८॥

इसी तरह की एक दृष्टान्त की और चर्चा कर रहे हैं–तरु अर्थात् वृक्ष को ही लीजिये । ऋतुकाल के ऊपर वृक्ष पूरी तरह निर्भर होता है । यह उसका स्वभाव ही है कि, उसमें कोपल निकलें, समय पर मुकुल और कलियों का प्रकल्प उसमें ललित कलित रूप से निकले, अङ्कुरों का उन्मेष हो, उसी तरह नित्यावियुक्त चिदानन्द रूप शिव और शक्ति का यह स्वरूपगत स्वभाव ही है कि, कृत्य पञ्चक का प्रपञ्च उससे प्रसरित हो जाय, प्रस्फुरित हो जाय ।

ऋतुकालभाजस्तरोर्यथा अयं स्वभाव एव यदङ्कुरादिवैचित्र्यवत्त्वम्, तथा नित्यावियुक्तचिदानन्दात्मनोः शिवशक्त्योः स्वरूपमेव एतद् यत् कृत्यपञ्चक-प्रपञ्चात्मना स्फुरणम् । तदुक्तं शिवसूत्रेषु–

'स्वशक्तिप्रचयोऽस्य विश्वम्' । इति । (३।३०)

इत्थं च एवंविधाशेषविश्वचमत्कारसारपरमशिवात्मकस्वचिद्भूमिविमर्शनं सर्वशास्त्रेषु परमोपादेयं जीवन्मुक्तिप्रदमुच्यत इत्याशयेन प्रश्नवाक्ये गुह्यमभिहितमिति शिवम् ॥३१९॥

शम्भोः पूर्णानन्दचिद्रत्नराशेः
शक्तिर्बाह्याभासनात्मोच्छलन्ती ।
देवी त्रैतैकात्मरूपामिमां तां
स्वां सम्पूर्णां देवतामामृशामि ॥

**।। इति श्रीस्वच्छन्दोद्द्योते एकादशः पटलः सम्पूर्णः ।।११।।**

---

शिव सूक्त भी यही कहता है कि,

'यह विश्व मात्र उसकी शक्ति का ही प्रचय है' इस तरह यह इस प्रकार का विश्व चमत्कार सार परमशिवात्मक चिद्भूमिके आमर्श प्रत्यवमर्श सभी शास्त्रों में प्रतिपादित है । यही परमोपादय रहस्य है । यही जीवनमुक्तिप्रद महामन्त्र है । यही रहस्य है । इसीलिये श्लोक ३१६ के प्रश्न वाक्य में गुह्य शब्द प्रयोग किया गया है । इसी गुह्यज्ञान से सर्व संशयों का समुच्छेद हो जाता है । परमेश्वर का प्रसाद प्राप्त होता है और इसी प्रसाद रूप अनुग्रह से तात्वर्य्य का उन्मीलन हो जाता है, इति शिवम् ॥३१९॥

चित्स्वरूप शिव शम्भु परम आनन्द शक्ति-शिव विमलविमर्श ।
यही रत्न की राशि बाह्य का विश्वाभास फलक आदर्श ।
परापरा-अपरा-अन्तर्हित परमाम्बा का प्रत्यवमर्श ।
करता हूँ मैं क्षेमराज नित शाक्त दिव्यता का संस्पर्श ॥

स्वातन्त्र्य समुद्भासित विश्वमूर्त्ति भैरव भट्टारक प्रकीर्त्तित
महामाहेश्वर आचार्य क्षेमराजकृतोद्योत विवरणोपेत
डॉ० परमहंसमित्रकृत नीर-क्षीर-विवेक भाषाभाष्य समन्वित

*श्रीस्वच्छन्दतन्त्र का*

*एकादाश पटल परिपूर्ण ॥११॥*

*शुभं भूयात्*

# श्रीस्वच्छन्दतन्त्रम्

**श्रीमन्महामाहेश्वराचार्यश्रीक्षेमराजकृतोद्द्योताख्यविवरणोपेतम्**

## अथ द्वादशः पटलः

स्वात्मनि स्वेच्छया क्लृप्ततत्तत्त्वस्फुटद्युतौ ।
स्वाभिन्ना भासयन्सिद्धीः स्वच्छन्दो जयति प्रभुः ॥

पटलसङ्गत्यर्थमुक्तमनुवदन्ती तत्त्वसिद्धिबुभुत्सया श्रीदेव्युवाच–

**सृष्टिः स्थितिश्च संहारस्तत्त्वानां कथितस्त्वया ।**
**जगत्सम्भवहेतुश्च**

जगतस्तत्त्वभूतभावभुवनादिरूपस्य हेतुः परमकारणं परमशिवः । एतच्च–

**त्वत्प्रसादाच्छ्रुतं मया ।।१।।**

प्रसादादि प्राग्वत् ॥१॥

---

स्वातन्त्र्य-समुद्भासित विश्वमूर्त्ति भैरव भट्टारक प्रवर्त्तित श्रीमन्महामाहेश्वराचार्य क्षेमराजकृतोद्योत विवरणोपेत डॉ० परमहंसमिश्र विरचित नीर-क्षीर-विवेक भाषाभाष्य संवलित

## श्री स्वच्छन्दतन्त्र

### द्वादशः पटल

### (१२)

स्वात्मफलकपर स्वेच्छया, स्वात्मरूप स्वच्छन्द ।
भासित करते सिद्धि सब, जय जय जगदानन्द ॥

पटल की सङ्गति बिठलाते हुए सभी तत्त्वों की सिद्धियाँ किस प्रकार की होती है ? उनके सदुपयोग के सदभिलाष को समुल्लसित करती हुई देवेश्वरी श्री देवी कह रही हैं–

भगवन् ! आपने तत्त्वों की सृष्टि, स्थिति और संहार के स्वरूप का वर्णन किया । साथ में इनकी उत्पत्ति के कारणों का भी स्पष्टीकरण किया । यह बताया कि, जागतिक तत्त्वों को, इनके भूत भाव और भुवनादिकों के परम कारण शिव का स्वरूप क्या है ? भगवन् ! आपके कृपा-प्रसाद रूप अनुग्रह से मैंने सब सुना और कृतार्थ हुई ॥१॥

इदानीं तु–

**तत्त्वविज्ञानमाख्याहि सिद्धिस्तेषु यथा भवेत् ।**

विज्ञानं धारणादिक्रमेण साक्षात्कारः । तेष्विति तद्विषया सिद्धिर्यथा स्यात् ।

एतद्वदितुं श्रीभैरव उवाच–

**पृथिव्यादि शिवान्तं च कथयामि समासतः ।।२।।**

यथा देहे यथा च बहिः स्थितम् । समासतः सङ्क्षेपेण, विस्तरतस्तु अग्रे धारणावसरे भविष्यति ।।२।।

तत्र–

**पृथ्वी कठिनरूपेण शृणु देहे यथा स्थिता ।**

यथा इति येन मांसादिना प्रकारेण । तदाह–

**मांसेऽस्थिषु तथा चैव स्नायुलोमनखेषु च ।।३।।**

**मज्जान्त्रेषु च विज्ञेया पृथ्वी पञ्चगुणोत्कटा ।**

एतच्च अग्रे स्फुटीभविष्यति ।

**कफासृगाममूत्रेषु रसस्वेदवसासु च ।।४।।**

**शुक्रे च सङ्ग्रहे चैव स्थिता आपश्चतुर्गुणाः ।**

देहे इत्येव । रस आहारपानपरिणामोत्थ आद्यो देहधारको धातुः । संग्रहः पार्थिवादीनां मांसादिभावेन परिणतानां संश्लेषः ।

---

भगवन् ! मेरी प्रार्थना है कि, इस समय आप मुझे तत्त्व के विज्ञान का रहस्य समझायें । मैं जानना चाहती हूँ कि, इसमें सिद्धियाँ किस प्रकार होती हैं, यह सुनायें । मैं धारणा क्रम से तत्त्वों का साक्षात्कार करना चाहती हूँ । भगवान् भैरव देवी के अनुरोध को स्वीकार कर बोले, देवि ! पृथ्वी से शिव पर्यन्त तत्त्व सिद्धि के सन्दर्भों को समान रूप से तुम्हें बता रहा हूँ । ध्यान पूर्वक सुनो ।।२।।

भगवान् कह रहे हैं कि, देवि ! पृथ्वीतत्त्व शरीर में जिस प्रकार कठिन रूप से अवस्थित है, इस तरह समझना चाहिये । १–मांस, २–अस्थि, ३–स्नायु, ४–लोम और नखों में, तथा ५–मज्जा एवम् आँतों में पञ्च गुणोत्कटा पाँच तन्मात्रमयी पृथ्वी अवस्थित है ।।३।।

कफ, असृक्, आम, मूत्र, रस, स्वेद और वसा, शुक्र एवं इनके पार्थिव मांसादि के साथ मिलकर अप् तत्त्व अवस्थित है । यह चार गुणों से युक्त है । इसमें केवल गन्ध नहीं होता ।।४।।

इसमें रस मुख्य होता है । आहार और जलपान के परिणाम से उत्पन्न आद्य देह धारक तत्त्व ही रस होता है । इनके ही पाचन और जठराग्नि से परिणत

**पचने दहने चैव तेजस्यूष्मणि संस्थितम् ।।५।।**

आहारादेः पाकनिमित्तं महाक्षारजननात्मकदाहाय परासह्यदीप्तये उपलभ्योष्म-सम्पत्तये च देहे तेजः स्थितम् ॥५॥

**तेजस्त्वेवं स्थितं देवि प्रकाशे च त्रिलक्षणम् ।**

प्रकाश इति नेत्ररश्मिद्वारेण वस्तुप्रथनाय । त्रयो रूपस्पर्शशब्दा लक्षणं यस्य । एतच्च अदृष्टवशाद् देहे अनुद्रिक्तरूपस्पर्शं स्पष्टम् ।

**वायुरुच्छ्वासनिःश्वासस्पर्शनव्यूहलक्षणः ।।६।।**
**मूत्रोच्चारविसर्गेषु अन्नपानप्रवेशने ।**

स्पर्शनं बाह्याभ्यन्तरस्पर्शग्रहणम् । व्यूहो रचना । उच्चारो मलपरिणामः । विसर्गो बहिष्कृतिः । तदित्थम्–

**वायुरेभिः स्थितो देहे विज्ञेयस्तु द्विलक्षणः ।।७।।**

एभिर्व्यापारैरुपलक्षितः । द्वौ शब्दस्पर्शौ लक्षणं ज्ञप्तिहेतुर्यस्य स द्विलक्षणो द्विगुणः ॥७॥

**एकलक्षणमाकाशं कथयामि यथा स्थितम् ।**

एकः शब्दो लक्षणं यस्य । तत्र पृथिव्याः खटखटारूपः, जलस्य च्छलच्छ-लता, तेजसो धगधगाकृतिः, वायोः शुकशुकास्वभावः, आकाशस्य प्रतिश्रुत्काख्यः शब्दः, स्पर्शोऽपि पृथ्व्याः पाकजोऽनुष्णाशीतः, जलस्य शीतः, तेजस उष्णः,

---

महापाक जन्य क्षार के दाह के असह्य रूप को सह्य बनाने के लिये और शरीर में जीवनोपयोगी ऊष्मा के रूप में तेज भी शरीर में अवस्थित है ॥५॥

इस रूप में प्रकाशमान तेज त्रिगुणोत्कट माना जाता है । नेत्र रश्मि के माध्यम से प्रकाश बाहर प्रक्षिप्त होता है । इसमें रूप भी है, स्पर्श भी है और शब्द का समन्वय भी है । यह त्रिलक्षणात्मक तेज शरीर में गर्मी भरे ऊष्मा से तो स्पष्ट रूप से जाना जाता है । हाँ रूप और स्पर्श इसमें उद्रिक्त नहीं है ।

इसी तरह देह में वायु भी अवस्थित है । यह उच्छ्वास निःश्वास, स्पर्श की संरचनाओं के कारण रूप में विद्यमान है । मूत्रोत्सर्ग, पुरीषोच्चार, अन्न और जल के भीतर प्रवेश रूप क्रियाओं में लक्षित होता है । इसके केवल शब्द और स्पर्श नामक गुणों से इसकी ज्ञाप्ति होती रहती है ॥७॥

जहाँ तक आकाश का प्रश्न है, यह 'शब्दगुणकमाकशम्' के अनुसार केवल एक गुण वाला है । एक मात्र शब्द ही इसका लक्षण है । पृथिवी में खटखटाहट जल में छलछलाहट, तेज धगधगाहट, वायु में सुरसुराहट आकाश में अनुसुनाहट का स्वभाव पाया जाता है ।

वायोरपाकजोऽनुष्णाशीतः, पृथ्व्याः सितादि नाना रूपम्, जलस्य सितम्, तेजसो भास्वरम्, पृथ्व्याः षड्विधो मधुरादिरसः, जलस्य मधुरः, पृथ्व्या एव तु सुरभिरूपो गन्ध इति । विशिष्टैरेव तैर्गुणैर्देहे पृथिव्यादिभूतानि लक्षणीयानि ।

यथास्थितमित्युक्तं स्पष्टयति-

**सुषिरात्मकं तु विज्ञेयं नवधाच्छिद्रलक्षणम् ।।८।।**

नव च्छिद्राणि द्वाराणि ब्रह्मरन्ध्रचक्षुःश्रोत्रघ्राणास्यचूचुकनाभिलिङ्गगुदगतानि लक्षणं यस्य ॥८॥

इत्थं नवद्वारलक्षितम्-

**शब्दात्मकं गुणं ह्येतत्कथितं तव सुव्रते ।**

एवं देहे भूतपञ्चकं प्रदर्श्य, तदुपस्थापकतत्प्रकाशकानि कर्मेन्द्रियबुद्धिमनांसि प्रकाश्येन्द्रियकारणभौतिकरूपादिप्रतीतिवशानुमेयानि रूपाद्यविशेषरूपाणि तन्मात्राणि उपपादयिष्यति । तत्र तावत्-

**वागिन्द्रियं वदेद्वाणीं सा च वाणी चतुर्विधा ।।९।।**

---

आकाश में प्रतिश्रुत्का रूप शब्द, स्पर्श पृथ्वी में पाकज, अनुष्ण और अशीत रूप में रहता है । जल में शीत रूप से, तेज में उष्ण, और वायु में अपाकज अनुष्ण का और अशीत रूप रहता है । पृथिवी सित रक्त पीत अनेक रूपवाली है । जल का केवल एक ही श्वेत रूप है । तेज का भास्वर और पृथिवी का छः रसमय मधुराम्ल लवणादि रसमय शरीर है । जल का मधु स्वभाव है और पृथ्वी मात्र गन्धवती है । इन्हीं विशिष्टगुणों के साथ पृथ्वी आदि तत्त्व देह में अवस्थित हैं । शरीर का सबसे विलक्षण स्वभाव है कि, नवधासुषिरों अर्थात् छिद्रों से समन्वित है । ये ९ छिद्र-१-ब्रह्मरन्ध्र, २-चक्षु, ३-श्रोत्र, ४-घ्राण, ५-चूचुक, ६-नाभि, ७-मुख, ८-लिङ्ग और ९-गुदामार्ग रूप हैं ॥८॥

इस तरह पृथिवी, जल, तेज, वायु और आकाश ये पाँचों तत्त्व शरीर में किस रूप में अवस्थित हैं, इसका ज्ञान होना चाहिये । इसे भगवान् भैरव ने स्पष्ट किया । इनकी उपस्थापक और इनकी प्रकाशक शक्ति के रूप में कर्मेन्द्रियाँ ज्ञानेन्द्रियाँ और मन नामक तत्त्व भी इस शरीर में हैं ।

इनके कैसे, किस तरह, क्यों इन्द्रिय कारणों और भौतिक रूपादि प्रकाशन के साथ ही इनका अनुमान भी होता रहता है, इन तथ्यों का उपपादन भगवान् कर रहे हैं । जैसे १-वागिन्द्रिय है । यह क्या करती है ? उत्तर है कि, यह वाणी का उच्चारण करती है । यह चार प्रकार की होती है । १-संस्कृता वाक्, २-प्राकृता वाक्, ३-अपभ्रंश वाक् और ४-अनुनासिका । यह चौथा भेद स्वीकार्य

**संस्कृता प्राकृती चैव अपभ्रष्टानुनासिका ।**

'संस्कृता नाम दैवी वागन्वाख्याता महर्षिभिः' ।

इति तत्रभवद्भर्तृहरिणा उक्ततात्पर्या संस्कृता । प्रकृतिभूताया वर्णलोपान्यथाभावादि-क्रमेण आयाता प्राकृति । यदाहुः-

'तद्भवस्तत्समो देशी त्रिविधः प्राकृतक्रमः' । इति ।

अपभ्रष्टा देशभाषा विचित्राः । अनुनासिका नासिकामनुगता गीयमानाक्षररूपा वर्णाङ्गमिति प्रसिद्धा ।

**छेदनं भेदनं दानं व्यधनं शिल्पयोजनम् ।।१०।।**
**ग्रहणं विजयश्चैव सर्वं हस्तेन्द्रिये स्थितम् ।**

छेदनं रज्ज्वादिषु । भेदः शरादिकृतो लक्ष्याधिष्ठः । विजयो युद्धम् । विजयी इति वा पाठः ।

**समनिम्नोन्नताश्चैव लोष्टकण्टकवालुकाः ।।११।।**
**कर्दमो जलदुर्गाणि रथ्याट्टालकपर्वताः ।**
**पादेन्द्रियेण गम्यन्ते देशान्तरगमागमे ।।१२।।**

---

नहीं है । इसे विदेशज वाक्य भेद कह सकते हैं । गीयमानाक्षर रूपा तो सभी वाणियाँ होती हैं । व्युत्पत्ति के अनुसार भी यह नाम उचित नहीं लगता । वर्णाङ्ग विशेषण भी व्यर्थ का विशेषण है । फिर भी यह भगवद्वाक्य है । इसे इसी रूप में जान-कर आधुनिक वाग्भेदों से भी परिचित होना चाहिये ।

'संस्कृता' नामक दैवी वाक् महर्षियों द्वारा आख्यात है, यह परिभाषा आचार्य भर्तृहरि की है । प्रकृति से प्राप्त प्राकृती वाक् होती है । प्राकृती वाक् में ही कुछ विद्वान् तद्भव, तत्सम और देशज शब्दों का ही अन्तर्भाव करते हैं ।

अपभ्रष्टा देश भाषा होती है और अनुनासिका नासिका से अनुगत होती है । वर्णाङ्ग के रूप में यह आचार्य क्षेमराज के समय प्रसिद्ध रही होगी ।

२-कर्मेन्द्रियों का पहला भेद वाक् है । इसके विषय में समास से कुछ कहा गया । यहाँ-हस्तेन्द्रिय (पाणि) के विषय में बता रहे हैं-

१-छेदन, २-भेदन, ३-दान, ४-व्यधन, ५-शिल्पयोजन, ६-ग्रहण, ७-विजय ये कार्य हस्तेन्द्रिय से सम्पन्न होते हैं । व्यधन बहेलियों का काम है । भेदन और शिल्पयोजन बढ़ई का है और ३-विजय योद्धा का है ।।९-१०।।

३-पादेन्द्रिय के द्वारा सम, निम्न, उन्नत भूमियों पर लोष्ट कण्टकाकीर्ण और बलुकामयी भूमियों पर, कीचड़ जलदुर्ग, रथ्या, अट्टों, पर्वतों आदि पर

देशान्तरगमनागमननिमित्तं समनिम्नादिस्थानानि पादेन्द्रियेण गम्यन्ते ॥१२॥

**उत्सर्गे पर्दिते चैव पायुर्वै चेष्टते सदा ।**

उत्सर्गो मलमोक्षः । पर्दितं गुदरन्ध्रेण कुत्सितशब्दः ।

**आनन्दकृदुपस्थश्च गम्यागम्यप्रवर्तकः ।।१३।।**

आनन्दकृत्त्वादेव विहितानिषिद्धादौ सर्वत्र प्रवर्तनमस्य स्वभावः, अत एव तन्नियमः शास्त्रे क्रियते ॥१३॥

तदित्थम्–

**कर्मस्वेतानि वर्तन्ते तेन कर्मेन्द्रियाणि तु ।**

यथा च एतानि ईदृंशि, तथा–

**बुद्धीन्द्रियाणि देवेशि वर्तन्ते बुद्धियोगतः ।।१४।।**

बुद्धेर्ज्ञानस्य योगः सम्बन्धस्तत्र तन्निमित्तं प्रवर्तन्ते ॥१४॥

तत्र वितत्य शब्दाख्यविषयप्रभेदनिरूपणपूर्वं श्रोत्रेन्द्रियस्य तदुपलब्धि-साधनत्वमाचष्टे–

**षड्जाख्यर्षभगान्धारमध्यमाः पञ्चमः प्रिये ।**
**धैवतो निषधश्चैव स्वराः सप्त प्रकीर्तिताः ।।१५।।**

---

चलना चढ़ना उतरना आदि काम सम्पन्न होते हैं । देश देशान्तर में इसी के माध्यम से आया जा सकता है ॥११-१२॥

उत्सर्ग और पर्दन तथा अश्विनी क्रिया पायु का काम है । उपस्थ मूत्रोत्सर्ग, स्त्री सम्भोग (विहित या निषिद्ध) (गम्य या अगम्य) दोनों जगह आनन्द प्रदान करता है ॥१३॥

चूँकि ये कर्मों में ही प्रवर्त्तित हैं । इसलिये इन्हें कर्मेन्द्रियाँ कहते हैं । इसी तरह बुद्धि के योग से ज्ञानेन्द्रियाँ कहलाती हैं ॥१४॥

**ज्ञानेन्द्रियाँ- श्रोत्र–**

शब्द के विषय में पहले कहा भी गया है । श्रोत्रेन्द्रिय से ही इनकी उप-लब्धि होती है । अतः शब्दोपलब्धि साधन होने के कारण सर्व प्रथम श्रोत्रेन्द्रिय के विषय में कह रहे हैं–षड्ज, ऋषभ, गान्धार, मध्यम, पञ्चम, धैवत और निषध ये सात स्वर माने जाते हैं ॥१५॥

**गान्धारो मध्यमः षड्जस्त्रयो ग्रामाश्च पार्वती ।**

इत्थम्-

**सप्त स्वरास्त्रयो ग्रामा मूर्छनाश्चैकविंशतिः ।।१६।।**
**तान एकोनपञ्चाशदित्येतत्सुरमण्डलम् ।**

तदित्थम्-

**सूक्ष्मशब्दाः स्मृता ह्येते चराचररवस्थिताः ।।१७।।**

सूक्ष्मध्वनिमात्ररूपाः, अत एव चराचरे सर्वत्र रवरूपतया ध्वनिमात्रावस्थिताः ।।१७।।

अथ-

**स्थूलांश्चैव प्रवक्ष्यामि यथावत्तान्निबोध मे ।**
**भेरीपटहशङ्खोत्था मृदङ्गपणवोत्थितः ।।१८।।**
**वेणुगोमुखशब्दश्च मन्दलो दर्दुरो ध्वनिः ।**
**तन्त्रीवाद्यानि चित्राणि करवाद्यानि यानि च ।।१९।।**
**संयोगजवियोगोत्थाः काष्ठपाषाणवारिजाः ।**
**अपभ्रंशोऽनुनासिक्यः संस्कृतः प्राकृतो रवः ।।२०।।**

संयोगजा हुडुक्कादिहस्तसंगोत्थाः, विभागजास्तु दलादिविश्लेषोदिताः ।।२०।।

---

गान्धार, मध्यम और षड्ज ये तीनों 'ग्राम' कहे जाते हैं । इसी तरह संगीत शास्त्र में इक्कीस मूर्च्छनायें होती हैं ।।१६।।

इसी तरह ४९ तान माने जाते हैं । इतना यह वाग्द्वारा विनि:सृत और कलाकलित संगीतज्ञों द्वारा गाये जाने पर गले और मुख से निकलने वाली कर्ण प्रिय, श्रुति मधुर सुर, रागिनियों की तान कहलाती हैं ।

ये सभी सूक्ष्म शब्द हैं । चराचर के 'रवों' में अवस्थित रहते हैं । सूक्ष्म शब्द अर्थात् सूक्ष्म ध्वनियाँ हैं । 'रव' रूप से अर्थात् रागिनी रूप से अवस्थित रहती हैं ।।१७।।

जहाँ तक स्थूल शब्दों का प्रश्न है, वे इस प्रकार हैं । जैसे, भेरी, पटह, शङ्ख, मृदङ्ग, पणव से निकले शब्द स्थूल होते हैं ।।१८।।

वेणु, गोमुख, मन्दल, दर्दुर ध्वनि, तन्त्रीवाद्य, हाथ से बजाये जाने वाले ढोलक, झाल आदि वाद्यों के सभी स्थूल शब्द हैं ।।१९।।

संयोग और वियोगज ताली आदि ध्वनियाँ, काष्ठ, पाषाण और जल से उत्पन्न अपभ्रंश और अनुनासिक संस्कृत या प्राकृत रव ये सभी स्थूल शब्दों की श्रेणी में आते हैं ।।१९-२०।।

तदित्थम्–

**सप्तस्वरप्रतिष्ठानि व्यक्ताव्यक्तानि चैव हि ।**
**उक्तानुक्तानि गृह्णाति श्रवणेन्द्रिययोगतः ।।२१।।**

वाद्यसंस्कृताद्यात्मकानि सर्वाणि शब्दरूपाणि सप्तस्वरात्मकध्वनिविशिष्ट-निष्ठानि श्रोत्रेण पुरुषो गृह्णाति ॥२१॥

ततश्च–

**शब्दोऽस्य विषयो ह्येष येन बुद्ध्येत पुद्गलः ।**

एष प्रोक्तरूपः सर्वः शब्दोऽस्य श्रवणेन्द्रियस्य विषयः । कस्य अस्येति । आह येन पुद्गलः पुमान् बुद्ध्येत जानीयात् । एवमुत्तरत्रापि संगतिः कार्या ।

**मृदुं च कठिनं चैव कर्कशं शीतलं तथा ।।२२।।**
**उष्णं च पिच्छिलं लोष्टं कर्दमं वालुकास्तथा ।**
**शरकुन्तासिघातादि ताडनं छेदनं तथा ।।२३।।**
**एतानि वै विजानाति स्पर्शनं च त्वगिन्द्रियम् ।**

स्पर्शनं सद् जानाति स्पर्शनक्रमेण वेत्तीत्यर्थः ।

तदित्थम्–

**स्पर्शोऽस्य विषयो ह्येष येन बुद्ध्येत पुद्गलः ।।२४।।**

---

इस प्रकार यह कहा जा सकता है कि, वाद्य संस्कार आदि से व्यक्त या अत्यक्त रूप से सुनी जाने वाली ध्वनियाँ, उक्त या अनुक्त सभी प्रकार के शब्द श्रवण इन्द्रिय योग से सुने जाते हैं । श्रवण ग्राह्य शब्द श्रोत्रेन्द्रिय साधन से ही कोई भी ग्रहण कर सकता है ॥२१॥

श्रोत्र का विषय शब्द ही है । शब्द जानकारी का साधन है । इसी से अर्थज्ञान होता है । पुद्गल पाशबद्ध पुरुष को शब्द के माध्यम से विषयों की जानकारी होती है । इस अवसर पर यह ध्यातव्य है कि, शब्द और अर्थ शिव-शक्ति रूप ही होते हैं ।

**२–स्पर्श–त्वक्**

स्पर्शन क्रिया की सक्रियता में व्यापृत इन्द्रिय का नाम त्वगिन्द्रिय है । यह इन्द्रिय, मृदुल, कठिन, कर्कश, शीतल, उष्ण, पिच्छिल, लोष्ठ, कर्दम, बालुका, शर, कुन्त और तलवार का आघात, ताडन, छेदन इन सबका ज्ञान करती है और कराती है । त्वगिन्द्रिय का विषय ही स्पर्श है । पुद्गल पुरुष को इसी इन्द्रिय द्वारा यह ज्ञान होता है ॥२२-२४॥

अथ–

**चतुरिन्द्रियकर्माणि कथ्यमानानि मे शृणु ।**
**सितं रक्तं पीतं च कृष्णं हरितधूम्रकम् ।।२५।।**
**कपिलं पिङ्गलं बभ्रु अन्यान्यपि विशेषतः ।**

रूपाणि । तथा–

**नरनारीपशुमृगाञ्ज्योतिःस्थावरजंगमम् ।।२६।।**

तदित्त्थम्–

**रूपाकृतिविविक्तानि चक्षुः पश्यति सर्वदा ।**

रूपं सितादि, आकृतिः संस्थानम्, ताभ्यां विविक्तानि विलक्षणानि वस्तूनि चक्षुः पश्यतीत्यस्य कर्तृत्वमुपचरितम् ।

तदेवम्–

**रूपाख्यो विषयो ह्यस्य येनात्मा प्रतिबुद्ध्यते ।।२७।।**
**मधुराम्लरसं चैव लवणं कटु तिक्तकम् ।**
**कषायमिश्रं स्वादुं च जिह्वा वेदयते रसम् ।।२८।।**

इत्त्थम्–

**रसोऽस्य विषयो ह्येष येन बुद्ध्येत पुद्गलः ।**
**सुरभिर्दिव्यगन्धश्च दुर्गन्धश्चाप्यनेकधा ।।२९।।**

---

३–चक्षु–इसके बाद चक्षु इन्द्रिय का क्रम आता है । यह तेजस् तत्त्ववती इन्द्रिय है ।

इसके माध्यम से श्वेत, रक्त, पीत, कृष्ण, हरित, धूम्र, कपिल, पिङ्गल, बभ्रु, शबल आदि वर्णों का ज्ञान होता है । नर, नारी, पशु, मृग, ज्योति, स्थावर जङ्गम सभी के रूपों और उनकी आकृतियों का ज्ञान इसी इन्द्रिय द्वारा होता है । रूप ही इसका विषय है । इसे देखकर आत्मा में प्रतिबोध का उदय होता है ॥२५-२७॥

४–रसना–मधुर, अम्ल, लवण, कटु, तिक्त, कषाय और मिश्र इन छः या मिश्र को मिलाकर सात रसों का आस्वाद जीभ से ही होता है । इसका विषय ही रस है । पुद्गल पुरुष जीभ से इनके आस्वादन का आनन्द प्राप्त करता है ।

५–पाँचवीं इन्द्रिय (ज्ञान) नासिका है । इसका विषय गन्ध है । इस इन्द्रिय के माध्यम से, सुरभि का ज्ञान होता है । दिव्य गन्धों की पहचान होती है । दुर्गन्ध और सुगन्ध का अन्तर इसी से पता चलता है । इसके अतिरिक्त भी सभी प्रकार के पुष्पों की गन्ध पहचान में आ जाती है । शरीरादि में बद्ध अभिज्ञान

**उभौ जिघ्रति नासाग्रे**

नासा कर्त्री अग्रे स्थितावुभौ जिघ्रति । अतश्च अस्य अयम्–

**विषयो गन्धसंज्ञितः ।**

**येनासौ बुद्ध्यते क्षेत्री अहङ्कारेण मोहितः ।।३०।।**

शरीरादौ बद्धाभिमानत्वादेव व्यतिरेकेण विषयान्वेत्ति । एतच्च पूर्वत्रापि सम्बन्धनीयम् ।

**सङ्कल्पे च विकल्पे च दशधाक्षेषु धावति ।**

**अनिवारितसन्देहमजय्यं सर्वदेहिनाम् ।।३१।।**

**मनश्च कथितं ह्येतद्धर्माधर्मनिबन्धकम् ।**

बुद्धिकर्मेन्द्रियविषये य इदं श्रितमिदमादधे इति सङ्कल्पः, यश्च इदमीदृश-मिति निश्चयात्मा विकल्पः । अत्र धावति यथा तथा प्रवर्तते । अत एव एतद् अनिवारितसन्देहं सर्वत्र ससंशयम्, ज्ञानयोगं विना यद् न केनचिज्जेतुं पार्यते, धर्माधर्माभ्यां निबध्नातीति तन्निबन्धकं तत्सङ्गमकृत् ।

अथ इन्द्रियकार्यरूपाद्युपलब्ध्यनुसारेण देहे तन्मात्रावस्थितिं दर्शयितुमाह–

**स्वरूपधर्मं वक्ष्यामि तन्मात्राणां यथार्थतः ।।३२।।**

अर्थः प्रयोजनं तदनुसारेण तन्मात्राणां स्वरूपमुपागतनियताश्रयावस्थितिरूपं धर्मं स्वभावं वच्मि ।।३२।।

---

के आधार पर ही ज्ञानेन्द्रियाँ काम करती हैं । इसमें जानने का अहङ्कार भी सम्मिलित है । पुरुष इसी तरह विषयों का बोध करता है । इस विषय में साधक को सावधान रहना चाहिये ।।२८-३०।।

अब मन के विषय में बतला रहे हैं । संकल्प, विकल्प तथा इन्द्रियों के दश प्रकार के विषयों में मन दौड़ता रहता है । इसके चाञ्चल्य के कारण इसके सन्देह का कभी भी निवारण नहीं हो पाता । यह ज्ञान योग के विना किसी के द्वारा विजित नहीं किया जा सकता ।

मन धर्म के द्वारा भी बन्ध में डालता है और अधर्म के द्वारा भी । इसलिये लिखा है कि, धर्म और अधर्म दोनों से अज्ञानियों को और भी सन्तप्त करता है ।।३१।।

यहाँ से तन्मात्राओं के यथार्थ धर्म स्वरूप का प्रतिपादन कर रहे हैं । वस्तुतः अर्थ प्रयोजन को कहते हैं । प्रयोजन के अनुसार ही उनकी नियत आश्रय में अवस्थिति रूप धर्म का वर्णन कर रहे हैं ।।३२।।

तत्र–

**गन्धं तु गन्धतन्मात्रं नासिकाग्रेण जिघ्रति ।**
**जिह्वया रसतन्मात्रं रसं गृहणाति संस्थितम् ।।३३।।**
**चक्षुषा रूपतन्मात्रं रूपं गृहणात्युपागतम् ।**
**गृहणाति स्पर्शतन्मात्रं त्वचा स्पर्शमुपागतम् ।।३४।।**
**शब्दं च शब्दतन्मात्रं गृहणाति श्रवणेन तु ।**

गन्धादिप्रतीतिसाधनघ्राणादीन्द्रियाश्रयनासिकादिक्षेत्रगतमदृष्टवशादुद्भूत-गन्धतन्मात्रादिकं कर्तृ तेनैव घ्राणादिना गन्धादिगुणं गृहणातीति संगतिः । अत्र च अयमाशयः–यदाहङ्कारिकत्वाद् व्यापकत्वेऽपि इन्द्रियाणां गन्धतन्मात्राद्यवस्थिति-नियमितं नासिकादिक्षेत्रमभिव्यक्तिस्थानमिति, तत एव समुद्भूतवृत्तिगन्धतन्मात्र-नियन्त्रिता गन्धस्योपलब्धिर्भवतीति नियमिततन्मात्रोपरक्ताहङ्कारिकत्वमिन्द्रियाणाम्, अन्यथा साङ्ख्यवत्केवले आहङ्कारिकत्वे नियतविषयसम्बन्धो न घटते, नैयायिकवद्वा केवलभौतिकत्वे तु अहंप्रतीत्यनुगमो न स्यात् ।

एतदुपसंहरति–

**सूक्ष्मस्तन्मात्रधर्मोऽयं भूतानां प्रकृतिक्रमात् ।।३५।।**

---

गन्ध की प्रतीति का साधन नासिका है । यह उद्भूत गन्ध तन्मात्र का ग्रहण करती है । अर्थात् नासिका के अग्रभाग से इसे सूँघ लेती है । जिह्वा रसतन्मात्र का ग्रहण करती है अर्थात् पदार्थ में अवस्थित रस का स्वाद ले लेती है ।।३३।।

नेत्र इन्द्रिय अपने नेत्र अवयव द्वारा उपागत रूप का ग्रहण कर लेती है । इसी तरह स्पर्श तन्मात्र का ग्रहण त्वक् इन्द्रिय करती है । यह त्वक् का लक्षण है कि, मृदु आदि स्पर्शों का अनुभव कर लेती है । इसी तरह शब्द शब्दतन्मात्र का विषय श्रवण इन्द्रिय द्वारा गृहीत होता है ।

वास्तविकता यहाँ यह है कि, यह सारी प्रक्रिया आहङ्कारिक है । फलतः इसकी त्यापकता के सन्दर्भ में इन्द्रियों में गृहीत गन्ध आदि तन्मात्राओं की स्थिति नियमित हो जाती है और इनकी इन्द्रियों के अवस्थान से अभिव्यक्ति होने लगती है ।

जैसे नासिकाग्र से गन्ध की अभिव्यक्ति श्रोत्र से शब्द की अभिव्यक्ति, रसना से रस की अभिव्यक्ति नियमित है । तन्मात्र नियन्त्रिता ही विषयाभिव्यक्ति होती है और इनकी उपलब्धि होती है । इस तरह तन्मात्रा से उपरक्त आहङ्कारि-कता इन्द्रियों में नियमित रूप से बनी रहती है ।

**दक्षं चोधोमुखं कृत्वा त्वङ्गुष्ठं च कनिष्ठिकाम् ।**
**उभयोरपि सङ्घृष्य वज्रमुद्रां प्रदर्शयेत् ।।१५।।**

उत्तानमिति विरलं प्रसारिततर्जनीमध्यानामिकं दक्षं च तादृशमेव तदुपरि पराङ्मुखं न्यस्तमुभयोः परस्परमङ्गुष्ठकनिष्ठिकाबन्धनेन

पार्श्वकृतकूर्परविन्यासेन पार्श्वसन्निविष्टतामस्याः सूचयति । वीर्यं च तत्रैव दर्शितम्–

'इच्छादिकनिजशक्तिप्रकाशिताधःस्थगोचरत्रितयाम् ।
स्वामेव परां शक्तिं वज्रमयीं वहसि षडरां त्वम्' ।। इति ।

गुरवोऽपि–

'वज्रमुद्रा बन्धकर्त्री सुस्थितिः स्वस्तिकायते' । इति ।।१५।।

**डमरुं मुष्टिबन्धेन दक्षहस्तस्य सुव्रते ।**
**सुषिरेण समायुक्तं दर्शयेत्तु वरानने ।।१६।।**

तत्त्वमस्याः प्रदर्शितमेव ।।१६।।

**मुद्गरं तु प्रवक्ष्यामि हस्तौ द्वौ संप्रसारयेत् ।**
**मुद्गरः कथितो ह्येष**

संप्रसारयेदिति सम्मुखौ प्रसारयेत् परस्परसंलग्नाविति अर्थात् । अस्या अपि परशुमुद्रया सह तत्रैव तत्त्वं दर्शितम्–

---

**वज्र मुद्रा–**

वामहस्त को अघोमुखकर उत्तान करे । दक्ष हस्त को नीचे की ओर करके दक्ष अंगुष्ठ और कनिष्ठा से वाम अंगुष्ठ और कनिष्ठा को आक्रान्त करे । शेष तीनों को बायें हाथ की तीनों पर रखने से वज्र मुद्रा बनती है । सूक्ष्म इच्छादि त्रितय को स्थूल रूप में जगत् में षडर मुद्रा रूप वज्र मुद्रा में हे माँ ! तुम्हीं व्यक्त हो रही है । यह मुद्रा बन्धकर्त्री और स्वस्तिविधात्री भी है ।।१५।।

**डमरु मुद्रा–**

दाहिने हाथ की छिद्रयुक्त मुठ्ठी का प्रदर्शन ही डमरु मुद्रा है ।।१६।।

**मुद्गर मुद्रा–**

सामने दोनों हाथों को फैलाये । दोनों हाथ परस्पर संलग्न रहें । इसका और परशु मुद्रा का अपने स्तोत्र में साथ वर्णन के पीछे आध्यात्मिक रहस्य है । वे कहते हैं कि, मुद्गर और परशु मुद्राओं को धारण करने से बैन्दव और नाद कलाओं के परामर्श से भेद विभेद उभय के भेदन में दक्ष है । यही रहस्य ईशान द्वारा व्यक्त किया जा रहा है ।

'मुद्गरपरशू बिभ्रद्वैन्दवनादानुकाररूपौ त्वम् ।
भेदविभेदनशकलनपरत्वमीशान निर्दिशसि' ॥ इति ।

गुरवोऽपि–

'गाढग्रन्थिगणास्फोटो मुद्गरेण प्रवर्तते' । इति ।

श्रीपूर्वशास्त्रे तु मुद्गरमुद्रा त्रिशिखा दर्शिता । तथा च–

'करावूर्ध्वमुखौ कार्यावन्योन्यान्तरिताङ्गुली ।
अनामे मध्यपृष्ठस्थे तर्जन्यौ मूलपर्वतः ॥
मध्ये द्वे तु युते कार्ये कनिष्ठे पुरुषावधि ।
तर्जन्यौ मध्यपार्श्वस्थे विरले परिकल्पिते ॥
मुद्गरस्त्रिशिखो ह्येष क्षणादेवोपकारकः' ॥ इति ॥ (७।२७)

अथ–

**वल्लकीं च निबोध मे ।।१७।।**

वल्लकीं वीणाम् ॥१७॥

**हस्तौ प्रसारयेद्देवि उत्तानौ तु समाहितः ।**
**अनामे कुञ्चयित्वा तु वीणामुद्रा प्रकीर्तिता ।।१८।।**

कुब्जा वीणाविषया । एषा वामपार्श्वे प्रदर्शनीया । अस्याः सतत्त्वं दर्शितमेव ॥१८॥

---

गुरु परम्परा से प्राप्त ज्ञान के अनुसार मुद्गर मुद्रा गाढ ग्रन्थियों में भेद पैदा कर उनका विनाश कर देती है ।

श्री पूर्वशास्त्र में इस मुद्रा को त्रिशिख कहा गया है । उसके अनुसार दोनों हाथों को ऊपर दोनों हाथों की अंगुलियों का संग्रथन करे । पुनः दोनों हथेलियों की पीठ पर दोनों अनामिकाओं को सटा दें । दोनों तर्जनियों को अंगूठे की जड़ में सटा कर दो गोलक बना लें । मध्यमाओं को ऊपर उठा लें । यह त्रिशिख मुद्गर मुद्रा का रूप है । यह क्षण में अपने उपासक को परमात्मा का आवेश प्रदान करती है और अत्यन्त उपकार करती है ॥ मा०वि० ७।२७-२९॥१७॥

**वल्लकी मुद्रा–**

दोनों हाथों को उत्तान प्रसारित करें । अनामिका द्वय का आकुञ्चन करें । उन्हें अंगूठों से आक्रान्त करें । इसे बल्लकी या वीणा मुद्रा कहते हैं । यह वाम पार्श्व में प्रदर्शनीय मुद्रा मानी जाती है ॥१८॥

**प्रसारयेदङ्गुलीस्तु कनिष्ठानाममध्यमाः ।**

**अङ्गुष्ठेनाक्रमेदाद्यां परशुः समुदाहृतः ।।१९।।**

स्वपराङ्मुखेन दक्षहस्तेन स्कन्धदेशे प्रदर्शनीयोऽयम् । तत्त्वमस्याः पूर्वमेव दर्शितम् । एताश्च मुद्रा गुप्ताः प्रदर्शनीयाः, अगुप्ते तु आयतनादौ वस्त्राच्छादिताः, अथवा स्मर्तव्या एवेति गुरवः । केचिदत्र परशुमुद्रास्थाने–

'भ्रामयेदङ्गुले द्वे तु चक्रं दुष्टनिकृन्तनम्' ।

इति पठन्ति । अन्यैस्तु एतत्प्रसङ्गात् शङ्खपद्ममुद्रालक्षणमपि क्षिप्तम्, अपरैस्तु परशुलक्षणम्–

'राजावर्तनिभो देवि मुद्गरः परशुस्तथा' ।

इति एतदनन्तरं पठितम् । तत् सर्वमुपक्रमोपसंहाराननुरूपत्वादुपेक्ष्यम् । एवं च प्रायशो ग्रन्थान्तरप्रक्षेपो ग्रन्थविपर्यासः पाठविपर्यासश्च अस्य ग्रन्थस्य दुर्मेधोभिः परिकल्पितः शतशाखो दृश्यते । सोऽस्माभिः पुरातनपुस्तकान्वेषणतो यावद्गति अपसारित इति आस्तामेतत् ।।१९।।

एतदुपसंहरन्प्रकृते योजयति–

**एता मुद्रा महादेवि भैरवस्य प्रदर्शयेत् ।**

**आवाहने निरोधे च तथा चैव विसर्जने ।।२०।।**

---

**परशु मुद्रा–**

हाथों की कनिष्ठा, अनामा और मध्यमा अंगुलियों को प्रसारित करें । अंगूठे से कनिष्ठा को आक्रान्त करें । इसे परशु मुद्रा कहते हैं । दक्षहस्त से स्कन्ध देश पर प्रदर्शनीय है । ये रहस्य मुद्रायें हैं । इन्हें छिपाकर प्रयोग में लाना चाहिये । कुछ विद्वान् मानते हैं कि, इस मुद्रा के स्थान पर दो अंगुलियों का चक्र घुमाना चाहिये ।

कुछ लोग यहाँ शंख, पद्म आदि का भी प्रक्षेप करते हैं । कुछ कहते हैं कि परशु राजा वर्त्त के समान होता है । आचार्य क्षेम इसे उपेक्ष्य मानते हैं । श्री क्षेमराज ने इस ग्रन्थ में प्रक्षेप को स्वीकार कर इसे शतशास्त्र तक की संज्ञा दी है । प्रक्षेपकों को दुर्मेध भी कहा है । बहुत अंशों तक श्री क्षेमराज ने इसे सुधार कर यह रूप दिया ।

मैंने तो पूरे तेरहवें पटल को ही प्रक्षेप कहा है, क्योंकि कोई मेधावी साधक ऐसे निकृष्ट काम्य कर्म करने की प्रेरणा किसी को नहीं दे सकता ।।१९।।

एता इत्युपसंहारात् कः परशुमुद्रायाः परो ग्रन्थेऽवसरो भैरवस्य उक्तः, कश्चक्रपद्मादिमुद्राणामवकाशो ध्यानग्रन्थे तेषामनुद्देशादिति यथापठितमेव साधु । आवाहनेत्यादिना–

'मुद्रां प्रदर्शयेत्पश्चात्त्रिधा त्रैकाल्यकर्मणि' ॥ (२।१०२)

इति पूर्वोक्तमेव निर्वाहितम् ॥२०॥

अथ ये वक्त्राङ्गभैरवाद्या आवरणस्थाः, तेषां साधारणं मुद्राबन्धं प्रदर्शयति–

**कपालं चैव खट्वाङ्गमनुक्तेषु प्रदर्शयेत् ।**

सर्वेषां ज्ञानक्रियाशक्तिस्फारसारत्वाद् मुद्राणां सन्निवेशमुक्त्वा यथौचित्यमासां मानसं रूपमाह–

**कपालं धवलं ज्ञेयं खट्वाङ्गं च तथैव हि ॥२१॥**
**त्रिशूलं चैव नाराचं खड्गो नीलोत्पलप्रभः ।**
**स्फरं रक्तं पिनाकं च कृष्णं संपरिकीर्तितम् ॥२२॥**
**घण्टा हेमप्रभा ज्ञेयाङ्कुशो मरकतप्रभः ।**
**पाशो भिन्नाञ्जननिभः स्फटिकाभोऽभयः स्मृतः ॥२३॥**
**वरश्चित्तप्रसादेन ध्यातव्यो वरवर्णिनि ।**
**डमरुं हेमसङ्काशं वीणां चैतत्समप्रभाम् ॥२४॥**

---

भगवान् कहते हैं कि, महादेवि ! ये मुद्रायें भैरव से समक्ष प्रदर्शित की जानी चाहिये । आवाहन, निरोधन और विसर्जन में इनका अवश्य प्रयोग करना चाहिये ॥२०॥

आवरण में अवस्थित वक्त्राङ्ग भैरव आदि के लिये कपाल और खट्वाङ्ग मुद्राओं का प्रदर्शन करना चाहिये । ये अनुक्त देव हैं । इनके लिये सामान्य मुद्राओं का प्रदर्शन ही पर्याप्त माना जाता है ।

ये मुद्रायें ज्ञान और क्रिया शक्तियों के स्फार की सार रहस्य रूपा मानी जाती है । इनका कहाँ सन्निवेश होना चाहिये यह स्पष्ट करने के बाद उनके उचित मानस वर्ण–रूपों की जानकारी भगवान् स्वयं दे रहे हैं–

१–**कपाल** और **खट्वाङ्ग** इन दोनों का वर्ण धवल होता है ।

२–**त्रिशूल** और **नाराच** इन दोनों मुद्राओं के वर्ण नील उत्पल के समान हैं ।

३–**स्फार** रक्त, **पिनाक** कृष्ण परिकीर्त्तित हैं ।

४–**घण्टा** हेमवर्ण से सुशोभित है । **अङ्कुश** मरकतप्रभ है ।

**दण्डं रक्तं विजानीयाद्वज्रं पीतं विचिन्तयेत् ।**

**राजावर्तनिभो देवि मुद्गरः परशुस्तथा ।।२५।।**

चित्तप्रसादेनेति प्रसादश्चित्ततुलयोऽनुपाधिसंवित्प्रकाशरूप इति यावत् ॥२५॥

उपसंहरति–

**मुद्रापीठं समाख्यातं चतुर्वर्गफलोदयम् ।**

न केवलं पूर्वनिर्दिष्टनीत्या इदं तन्त्रं विद्यामन्त्रमण्डलपीठरूपं यावदिह मुद्राश्रयतया मुद्रापीठरूपमपि चतुर्वर्गस्य समय्यादिचतुष्टयस्य रक्षासन्निधितत्त्वानुप्रवेशहेतुत्वात् फलोदयो यतः । एतत्–

'चतुष्पीठं महातन्त्रं चतुर्वर्गफलोदयम्' । (१।५)

इत्यस्य ग्रन्थस्य निगमनरूपम् ।

एवं मुद्राणां कायीयं मानसं च रूपमुक्त्वा, वाचिकमपि आह–

**प्रणवासनमारूढा ओंकाराद्या वरानने ।।२६।।**

**स्वनामकृतविन्यासा नमस्कारावसानिकाः ।**

भगवच्छक्तिरूपाणां मुद्राणां स्वरूपं विमृशेत् ।

एवं सन्निवेशबन्धध्यानमन्त्रपरामर्शस्फुटीकृता एता विघ्नत्राणभगवत्स्वरूपसन्निधानतदनुप्रवेशनादिरूपाणि–

**साधयन्ति महादेवि फलानि विविधानि तु ।।२७।।**

---

५–**पाश** मुद्रा एकदम काली और **अभय** स्फटिक प्रभा है ।

६–**वर** मुद्रा चित्त में प्रसाद उत्पन्न करती है ।

७–**डमरु** स्वर्णवर्णी मुद्रा है । **वीणा** भी इसी वर्ण की है ।

८–**दण्ड** मुद्रा लाल है । **वज्र** मुद्रा पीली है ।

९–**मुद्गर** व **परशु** राजावर्त्त के समान मुद्रायें हैं ।

चित्त प्रसाद–अनुपाधि संवित्प्रकाश गुण है ॥२१-२५॥

यह मुद्रा पीठ है । इससे चतुर्वर्ग फलोदय होता है । समयी साधक (लोकधर्मी शिवधर्मी) और पुत्रक आचार्य (गुरु आदि) सबको समान फल प्रदान ये मुद्रायें करती हैं । मुद्रायें एक पीठ के रूप में स्वीकृत हैं–

मुद्रा, मण्डल, मन्त्र और विद्या ये चार पीठ हैं । इसी आधार पर शिवोक्त संहिता चतुष्पीठा मानी जाती हैं । इसी ग्रन्थ के प्रथम पटल के श्लोक पाँच द्वारा इस स्वच्छन्द संहिता के विषय में कहा गया है कि, यह महातन्त्र चतुष्पीठ चतुष्टय फलोदय है । यह चतुष्टय, समयी–साधक, पुत्रक और गुरु रूप ही है ।

देव्या महत्पदेन विशेषणेन मुद्रावीर्यज्ञतां प्रकाशयन्मुद्राणां वीर्यमेव सारभूतमिति शिक्षयति ॥२७॥

पाटलिकं प्रमेयमुपसंहरति–

**निर्विघ्नकरणं ख्यातं मुद्राणां लक्षणं प्रिये ।**
**वेदितव्यं प्रयत्नेन साधितव्यं महात्मना ॥२८॥**

यद्यपि भगवत्सन्निधानतदनुप्रवेशादौ विघ्नव्युदासार्थं समय्यादिभिरपि एतद् मुद्रालक्षणं ज्ञातव्यम्, तथापि साधकेन विशेषतो ज्ञातव्यं मुद्राबन्धरक्षितस्यैव अस्य साध्यसिद्धेः । यथोक्तं पूर्वशास्त्रे–

'याभिस्तु रक्षितो मन्त्री मन्त्रसिद्धिमवाप्नुयात्' ॥ (७।१)

इति शिवम् ॥२८॥

---

इस तरह मुद्राओं के कायीय और मानस रूप की चर्चा करने के बाद वाचिक स्वरूप की चर्चा कर रहे हैं । भगवान् भैरव कह रहे हैं कि,

ये सभी मुद्रायें प्रणव के आसन पर विराजमान हैं । इसीलिये इन्हें ओंकारादि मानते हैं । अपने नाम के अनुरूप भगवदायुधानुकाररूपा ये मुद्रायें अपनी आकृति रूप से शरीरावयवों विशेषतः कराङ्गुलियों से विन्यस्त होती हैं । ये पूजा की अन्तिम प्रणाम रूप भी मानी जाती हैं । इस तरह ये सन्निवेश, बन्ध ध्यान और मान्त्रिक परामर्शों द्वारा स्फुट रूप से व्यक्त हैं । ये विघ्नों से रक्षा करती हैं । भगवत्स्वरूप का सन्निधान कराती हैं । साथ ही भगवत्सत्ता में अनुप्रवेश की उपाय भी बनती हैं । इस तरह विविध फलों का साधन करती हैं । इस वर्णन से यह सिद्ध हो जाता है और देवी के साथ महाशब्द के विशेषण से भी यह सिद्ध हो जाता है कि, विश्वाराध्या से कही गयीं ये बातें अवश्य ही महत्त्वपूर्ण हैं । इन मुद्राओं में भरे हुए सामर्थ्य का ज्ञान बताते हुए भगवान् विश्व को यह शिक्षा दे रहे हैं कि, मुद्राओं के महत्त्व को नित्य विमृष्ट करना चाहिये ॥२६-२७॥

भगवान् पटल के अन्त में उमा को संबोधित करते हुए कह रहे हैं कि, देवि ! ये मुद्राओं के लक्षण हैं । इनसे विघ्नों का विनाश होता है । महात्मा साधकों का यह कर्त्तव्य है कि, इन्हें जानें, प्रयोग करें और अनन्त शुभ फलों की प्राप्ति करें ।

यद्यपि भगवत्संन्निधान और तदनुप्रवेश की पावन प्रक्रिया में विघ्नों के विनाश के लिये समयी आदिकों को भी इनके लक्षणों से परिचित होना चाहिये । फिर भी साधकों को तो विशेष रूप से जानना चाहिये । मुद्राबन्ध से

स्वावष्टम्भवशोन्मिषन्निजमहामन्त्रावमर्शस्फुरत्-
स्वच्छन्दस्फुरणामयाः परतरस्फारामृतस्यन्दिनः ।
उद्यन्त्येव तनावकृत्रिमतया द्रागेव मुद्राक्रमा
यस्य त्रोटति पाशकुञ्जरभरः पायात्स एकः शिवः ॥

**।। इति स्वच्छन्दोद्द्योते मुद्राप्रकाशः**

**चतुर्दशः पटलः ।।१४।।**

---

रक्षित साधक के साध्य की सिद्धि इनसे सरल हो जाती है । श्री पूर्व शास्त्र ७।१ में यह लिखा गया है कि, 'इन मुद्राओं से रक्षित मन्त्र प्रयोक्ता मन्त्रों की यथा शीघ्र सिद्धि प्राप्त कर लेता है' । इति शिवम् ।

उद्योतकार पद्यानुवाद–

स्वात्म के सहारा शिव, इनसे ही उन्मिषित,
सभी महनीय मन्त्र, साधना के संविधान ।
स्वच्छ स्वच्छन्द से ही संस्फुरित विश्वोल्लास-
अमृत आनन्द निष्यन्द–अवदान
काया में, मन में और वाणी में निष्पन्न
मुद्रा क्रम कलना के अकृत्रिम वरदान
मिलते ही भग्न होते आवरण अकारण सब
रक्षक रह जाते शिव अन्तर में यजमान ।

स्वात्म निवेदन–

मुद्रयोन्मुद्रिताः सर्वे पाशाः आवरण-प्रदाः ।
साधना निरतो हंसः शिवं समनुप्राविशत् ॥

***श्रीस्वच्छन्दतन्त्र***

*का*

*महामाहेश्वर श्रीक्षेमराजकृतोद्योत विवरणोपेत*

*डॉ० परमहंसमिश्र कृत नीर-क्षीर-विवेक भाषाभाष्य-समन्वित*

*मुद्राप्रकाश नामक चौदहवाँ पटल परिपूर्ण*

*शुभं भूयात्*

# श्रीस्वच्छन्दतन्त्रम्

**श्रीमन्महामाहेश्वराचार्यश्रीक्षेमराजकृतोद्योताख्यविवरणोपेतम्**

## अथ पञ्चदशः पटलः

..........................................................।

...........स्वात्मविश्रान्तेः स्वच्छन्दो जयति प्रभुः ॥

अथ समयिमध्ये समयिनां तान्त्रिकव्यवहारगोपनेन निर्विघ्नसिद्धिसम्पत्त्यर्थं प्राक्प्रमेयशेषतया पटलमारभमाणश्छुम्मकाशर्मपर्यायपारिभाषिकसंज्ञाभिर्लोकोत्तर-व्यवहारप्रवर्त्तनेन गूढतया शास्त्रस्य अस्य रहस्यतां दर्शयितुं श्रीभैरव उवाच-

**जपध्यानादियुक्तस्य चर्याव्रतधरस्य च ।**
**छुम्मकाः संप्रवक्ष्यामि साधकस्य वरानने ।।१।।**

---

### श्री स्वच्छन्दतन्त्रम्

**अथ पञ्चदशः पटलः**

**(१५)**

विश्वाराध्य वरेण्य विभु, विश्वोल्लास-विभास ।
स्वजनात्मा-विश्रान्ति जय जय स्वच्छन्द विलास ॥

यह वह पटल है, जहाँ भगवान् भैरव भट्टारक देवी के प्रश्नों का उत्तर देकर विश्रान्ति की मुद्रा अपनाना चाहते हैं । उनकी समाधि का समय आ रहा है । यहाँ तक के पटल क्रम में समयाचार रत समयी शिष्यों को तान्त्रिक व्यवहारवाद से अवगत कराया । कुछ ऐसे भी तथ्य हैं । जिनका गोपन भी रहस्यगुह्य बनकर रह गया । शिष्यों पर अनुग्रह का स्वभाव विश्वाराध्य शिव में है । उनकी सिद्धिरूपा संपत्ति को सुसम्पन्न करने के उद्देश्य से प्रमेयों को उन्होंने माध्यम बनाया और पटलों को अवतरण किया ।

इस पटली में एक नयी पारिभाषिकता से भूषित शब्द का प्रयोग कर इसका विस्तार पूर्ण विवरण श्री स्वच्छन्द भैरव भट्टारक देना चाहते हैं । यह शब्द है- छुम्मका । यह शारीरिक भाषा का शब्द है । भगवत् सम्प्रदाय में अनुप्रविष्ट समयी शिष्यों के चिन्तन की सरणी का यह पर्याय है ।

छुम्मका तत्समयानुप्रविष्टसञ्चित्या पारिभाषिकी संज्ञा । साधकस्येति प्राचुर्याश्रयेण ।

तत्र–

**भैरवस्तु स्मृतो धाम सर्वदस्तु गुरुः स्मृतः ।**
**साधकस्तु गिरिर्ज्ञेयः पुत्रको विमलः स्मृतः ।।२।।**

आराध्यदेवतायाः परमोपादेयत्वात् तदुपक्रमा इयमुक्तिः । धामेति सूर्यसोमवह्नितेजसामपि प्रकाशकत्वाद् विश्वविश्रान्तिस्थानकत्वाच्च धाम । सर्वद इति स्वात्मनि परिपूर्णतया निराकाङ्क्षस्य गुरोः परार्थैकप्रयोजनत्वात् । गिरिरिति अप्रकम्प्यत्वादाराधनैकतत्परः । विमल इति सर्वस्य आन्तरभूमेः संशोधनाद् विगतमलः । स्मृत इति अविच्छेदेन पारम्पर्येण । एवमुत्तरत्र ।।२।।

---

यह जप और ध्यान आदि में युक्त रहने वाले, चर्या व्रत के धारण करने वाले शिष्यों और साधकों के लोकोत्तर व्यवहार का प्रवर्त्तक और इस गूढ शास्त्र की गुह्यरहस्य भावना को स्फूर्त्त करने वाला छुम्मका विधान है । साधक प्रचुरता से इसका आश्रय लेते हैं । उसे ही भगवान् कहेंगे । इस पर विशेष ध्यान देने की आवश्यकता है ।।१।।

**'भैरव'** साधकों का परम धाम है । इन शास्त्रों में **'गुरु'** सर्वप्रद माना जाता है । साधक को **'गिरि'** कहते है । **'पुत्रक'** विमल (मलरहित निर्मल साधक) माना जाता है ।

भैरव इस सम्प्रदाय के आराध्य देव है । वही परमोपादेय आराधना के आधार है । यह उक्ति उन्हीं की सत्ता का उपक्रम प्रस्तुत करने में चरितार्थ है ।

वे ही आराधकों के परम धाम हैं । सूर्य, सोम और अक्षि के तैजस तत्त्व के भी प्रकाशक और विश्व विश्रान्ति के स्थान हैं । इसीलिये उन्हें धाम कहते हैं ।

वे सर्वद हैं । गुरु स्वात्म में पूर्णतया निराकाङ्क्ष होता है । परार्थ के प्रयोजक होने के कारण सब कुछ प्रदान करने में समर्थ हैं ।

साधक गिरि होता है । पर्वत सर्वथा अप्रकम्प्य होता है और अनवरत आराधना में पर्वत की तरह स्थिर रहता है । अतः गिरि है ।

साधक की आन्तर भूमि अध्वशोधन की प्रक्रिया से निर्मल हो चुकी होती है । इसीलिये उसे विमल कहते हैं ।।२।।

**समयी कान्तदेहस्तु भगिन्यो बलदर्पिताः ।**

कान्तदेह इति कान्तः शुद्धविद्यानुप्रवेशेन दीप्तिमान्देहो यस्य । मन्त्रसिद्धिफलेन याः सञ्जातदर्पा भगिन्य इव मन्त्राराधननिष्ठानामिति तथोक्ताः ।

सर्वेषामेषां यागोपयोगिद्रव्यविशेषविषयां छुम्मकामाह–

**मद्यं तु हर्षणं ज्ञेयं**

हर्षयतीति कृत्वा ।

**मुदिता तु सुरा स्मृता ।।३।।**

मुदितेति मुदितं हर्षरस्तद्धेतुत्वात् ।।३।।

तथा–

**मत्स्या जलचरा ज्ञेयाः**

जलचरजातेः श्रीचर्याकुलनिरूपितनीत्या चरुभोजनतो दीक्षितत्वाद् भैरवयागे परमोपादेयत्वमित्येवं छुम्मकया निर्देशः ।

**मांसं च बलवर्धनम् ।**

मांसेन असाधारणचमत्कारहेतुना रसादिधातुषट्कपरिपुष्टिक्रमात् बलस्य वीर्यस्य वर्धनात्–

'जग्धिपानकृतोल्लासरसानन्दविजृम्भणात्' । (७२)

इति श्रीविज्ञानभट्टारकनिरूपितनीत्या योगिनं प्रति बलस्य स्पन्दात्मनः शाक्तवीर्यस्य विवर्धनादुत्तेजनादेवमभिधानम् । गोवलीवर्दन्यायेन च मत्स्याद् मांसं व्यतिरिक्तमुच्यते ।

---

समयी कान्त देह होता है । शुद्धविद्या में अनुप्रवेश के कारण उसके शरीर की दीप्ति में दिव्यता आ जाती है । इसी तरह साधिका भगिनियाँ मन्त्राराधन में निष्ठ होने के कारण बलदर्पित होती हैं ।

सबसे उत्तम छुम्मका **मद्य** होती है । इसके सेवन से मानसिक प्रसन्नता बनी रहती है । इसी तरह **सुरा** मोद प्रदान करने से मुदिता मानी जाती है ।।३।।

**मत्स्य** जलचर होते हैं । चर्या में यह स्वीकृत है । भैरवयाग में परमोपादेय है । इसी तरह **मांस** बल बढ़ाने वाला अखाद्य खाद्य है । इससे असाधारण चमत्कार होता है । छः धातुओं को पुष्ट करता है ।

श्री विज्ञान भैरव में कहा गया है कि, भोजन पान से शारीरिक उल्लास, शाक्तवीर्य की वृद्धि और आनन्द रस का विजृम्भण होता है । गोवलीवर्द न्यायानुसार मत्स्य से मांस भिन्न है ।

**जातं प्ररूढमित्याहुर्मृतं चैव पराङ्मुखम् ।।४।।**

देहप्राणादिबन्धसाम्मुख्यादपवृत्तमित्याहुः पारम्पर्यनिष्ठाः ।।४।।

**रक्तं त्वमृतमित्याहुः पद्मनालोऽन्त्रसञ्चयः ।**
**शुक्रं चन्द्रः समाख्यातः स्नायुः सूत्रं प्रकीर्तितम् ।।५।।**

तत्तद्रहस्ययागविशेषोपयोगिनां रक्तहृत्पद्मान्त्रशुक्रस्नायूनाममृतं पद्मनालश्चन्द्रः सूत्रमिति गुप्तानि सङ्केतनामानि परमाप्यायहेतुत्वात् कर्णिकादलादियुक्तत्वादस्थूल-दीर्घरूपत्वात् सितत्वाह्लादकत्वयोगात् तत्तदुपह्रियमाणवस्तुग्रथनहेतुत्वाच्चेति एतेऽत्र हेतवः क्रमेण योज्याः । पद्ममित्यत्र आवृत्त्या द्विः पद्मशब्दः स्थितः, तेन हृत् पद्ममित्येवमभिधातव्यमित्यर्थः ।।५।।

किञ्च वीरचर्यास्थानम्–

**श्मशानं डामरं ज्ञेयं**

समस्तशङ्कातङ्कत्रोटकत्वेन उड्डामरत्वाद् डामरम् ।

तत्रत्येऽपि क्वचित्कर्मणि सहचरतया उपयुक्तः–

**राक्षसस्तु भयङ्करः ।**

**पिशाचो रोमजननः**

अधीराणां मितहृदयत्रासप्रदत्वात् भयेन रोमोर्ध्वसरणाच्च । क्वचिद् रहस्या-चारे उपयुज्यमाना–

**रुहा ज्ञेया रजस्वला ।।६।।**

---

उत्पन्न प्ररूढ है । देह प्राणादि का बन्ध इसमें मुख्य है । मृत पराङ्मुख माना जाता है ।।४।।

**रक्त** को अमृत कहते हैं । **पद्मनाल** आँतों के जाल को कहते हैं । **शुक्र** ही चन्द्र है । **स्नायु** ही सूत्र है । ये गुप्त संकेत नाम हैं । ये परम आप्यायक हैं । रक्त, हृदयपद्म, शुक्र और स्नायु अमृत रूप हैं । ये सित हैं और आह्लादक हैं ।।५।।

वीरचर्या का स्थान **श्मशान** होता है । इसे तन्त्र की भाषा में डामर कहते हैं । यह समस्त शङ्काओं के आतङ्क का मोदक है । उड्डामर है । **राक्षस** भयङ्कर कहलाता है । **पिशाच** को रोमजनन कहते हैं । त्रासप्रद और रोमाञ्चकारी होने के कारण इसे **रोमजनन** कहते हैं । **रुहा रजस्वला** होती है । वरिचर्या में यह रोहित रहती है । अतएव रुहा है ।।६।।

रोहतीति रुहा वीरचर्याया आश्रयभूता ।

**रात्रिं वै च्छादिकां विद्धि**

छादयति पशूनामदर्शनपथं प्रापयति वीराचारमिति च्छादिका ।

यत्र तु रहस्यवीराचारो दर्शनीयो न भवति, तत्–

**प्रकाशश्च दिनं भवेत् ।**

प्रकटत्वात् प्रकाश इत्युच्यत इत्यर्थः ।

अथ नेत्रजिह्वादौ कर्मविशेषोपयोगिनि शरीरावयवे पारिभाषिकं सङ्केतं करोति–

**नयने चञ्चले ज्ञेये जिह्वां सङ्ग्राहिकां विदुः ।।७।।**

लम्बिकादिरसङ्ग्राहित्वात् ।।७।।

तथा–

**करौ धनकरौ ज्ञेयौ पादौ सहचरौ विदुः ।**

परमेश्वरताप्राप्तिहेतुपूजानिधानकर्तृत्वादेकैकस्य गमनाद्यनुपपत्तेश्च । किञ्च–

**लिङ्गं सन्तोषजननं भगः प्रीतिविवर्धनः ।।८।।**

स्पष्टार्थसंज्ञे ।।८।।

क्वचिद् वीरपाशच्छेदादावुपयुज्यमानम्–

**शस्त्रं विभागजननं**

तथा–

**कर्तरी कार्यसाधिका ।**

---

पशुओं (पाशबद्धों) को अदर्शन पथ पर ले जाने के कारण और छादिका होने के कारण इसे **छादिका** कहते हैं । रहस्य दर्शन का आच्छादन इसमें होता है । **प्रकाश** को दिन कहते हैं । प्रकट होने के कारण ही इसे प्रकाश कहते है ।

नेत्र और जीभ से दोनों के कर्म विशेष में उपयोग होते हैं । शरीर के ये विशेष अवयव हैं । इनके परिभाषिक सङ्केत **नयन** अर्थात् **'चञ्चल'** और **जीभ 'संग्राहिका'** कही जाती है । लम्बिकाऽऽदि रस का ग्रहण करती है । अतः संग्राहिका है ।।७।।

हाथ धनकर और पैर सहचर हैं क्योंकि हाथ से परमेश्वर की पूजा का अवसर रूपी धन मिलता है और पैर तीर्थादि यात्रा के सहायक हैं । **लिङ्ग संतोषजनन** और भग **प्रीतिविवर्धन** होते हैं ।।८।।

**शस्त्र विभाजनकारक** हैं । **कत्तरी 'कार्यसाधिका'** होती है । 'दूती' को **'संवाहिका'** कहते हैं । वीर के रहस्याचार की वाहक होने से ही संवाहिका कहते हैं ।

कार्यं पाशसूत्रादिकर्तनं साधयतीति । तथा–

**दूती संवाहिका ज्ञेया**

समं सह वाहयति निर्वाहयति वीरस्य रहस्याचारमिति संवाहिका दूती भार्या उच्यते, अथ दूती घण्टा सममान्तरध्वनिना वाहयति प्रापयति बाह्यमिति कृत्वा संवाहिका । तथा–

**धूपो ह्लादन उच्यते ।।९।।**

**गन्धः सन्तोषजननः**

गन्ध इति समालम्भनद्रव्यम् । छुम्मके एते स्पष्टार्थे ।

**राजानो धारकाः स्मृताः ।**

ये धारकाः पिष्टादिमया दीपाधारास्ते राजन्ते दीप्यन्त इति कृत्वा राजान उक्ताः, अन्ये तु ये राजानो भूमिपालास्ते धारयन्ति पूजा इति कृत्वा धारका इति व्याख्यावन्तः ।

**पशुर्विबोधको ज्ञेयः**

यः पशुर्देवताभ्य उपहारीक्रियते, स वसासृगाद्याहारक्रमेण विबोधयति तास्ताः संविद्देवता इति विबोधकः ।

यस्तु देवताभिः साधितो विशिष्टः कश्चित् चरुकः, सः–

**चरुकः सार्वकामिकः ।।१०।।**

सर्वान् कामान् समवाप्नोतीति कृत्वा ।।१०।।

**अन्नं साधनमित्युक्तं**

यत्पुनरन्नं तत् साधनमिति उक्तम् ।

**वसा मण्डमिहोच्यते ।**

सर्वजनसाधारणत्वाद् मण्डमिव मण्डमाचामः ।

---

दूती को भार्या भी कहते है । आन्तर ध्वनि से घंटावत् बाह्य वहन भी करती है । अतः उभयथा संवाहिका होती है । **धूप ह्लादन** होता है ।।९।।

**गन्ध सन्तोषजनन** होता है । समालम्भन द्रव्य को गन्ध कहते हैं । राजा **धारक** होते हैं । ये दो प्रकार के होते हैं । १–पिष्टादि से बनाये गये **दीपाधार** और भूमिपाल भी पूजा धारण करने से **दीपाधार** हैं । देवताओं के लिये बलि के पशु **विबोधक** माने जाते हैं । चरु सभी कामों को सिद्ध करता है । अतः **'सार्व-कामिक'** माना जाता है ।।१०।।

अन्य **'साधन'** वसा **मण्ड** और श्रवण दिशाओं के मुख होते हैं । दिग्देवता

अथ–

**दिशां मुखं तु श्रवणं**

श्रवणं श्रोत्रं दिग्देवताधिष्ठितत्वाद् मुखमिति उच्यते ।

**त्वक् च संवेदनी स्मृता ।।११।।**

संवेद्यते अनया स्पृश्यं वस्तु इति कृत्वा ।

**घ्राणं सुस्थितमित्युक्तं**

सुगन्धिद्रव्याघ्राणक्रमेण सुखेन स्थितं स्थानं संविदो यस्मिन्निति कृत्वा ।

**मुखं तु प्रविचारकम् ।**

मुखमिति उपहार्यपशुशिरः प्रविचार्यते चक्षुरादिद्वारेण रूपादिवस्तु येनेति कृत्वा प्रविचारकमुच्यते ।

**पशुः प्रचारो विज्ञेयः**

प्रचारस्य विश्वेन्धनक्षारविमोकस्य हेतुत्वात् प्रचारः ।

एवं पश्वङ्गविषयां छुम्मकामुक्त्वा अन्या अपि आह–

**माता धात्रीति कथ्यते ।।१२।।**

**पितरं सृष्टिकर्तारं भ्रातरं पालकं विदुः ।**

**भगिनी शुभकरी ज्ञेया सखी सर्वार्थसाधिका ।।१३।।**

**मित्रं गुणानां जननं गुणनाशं रिपुं विदुः ।**

स्पष्टम् । पुनः शरीरावयवेषु च्छुम्मकाः प्राह–

**छित् स्फिजौ कीर्तितो देवि**

छिनत्ति द्विधा प्रकाशयति अधःकायसंस्थानमिति च्छित् ।

**दृष्टिश्चक्षुः प्रकीर्तितम् ।।१४।।**

दृष्टिर्दर्शनव्यापारः । चष्टे व्यनक्ति रूपमिति चक्षुः ॥१४॥

---

से अधिष्ठित दिशाओं के मुख हैं । त्वचा **'संवेदनी'** होती है । स्पृस्य वस्तु का संवेदन त्वचा से ही होता है ॥११॥

घ्राण को **सुस्थित** कहते हैं । संवित्तिका सुख पूर्वक स्थित स्थान ही घ्राण है । सुख प्रविचारक है । इससे उपहार्य पशु का शिर, उसकी आँख आदि के द्वारा प्रविचारित होता है । अतः **प्रविचारक** है । पशु को **प्रचार** कहते हैं । विश्वेन्धन क्षार विमोचन हेतु होने से प्रचार है । और माता को धात्री कहते हैं ॥१२॥

पिता सृष्टिकर्त्ता, माता पालक, भगिनी शुभकरी, सखी सर्वार्थसाधिका होती है ॥१३॥

मित्र गुणजनक, शत्रु, गुणनाश स्फिजों को च्छित् कहते हैं । दृष्टि ही चक्षु है ॥१४॥

**दशनाः खण्डका ज्ञेयाः**

खण्डयन्तीति कृत्वा ।

**आधार उदरं स्मृतम् ।**

उदरं यत्तदशितादेरासमन्ताद् धारणादाधारः ।

**हृदयं गुह्यमित्युक्तं**

हृत्स्थानं गुह्यात्माश्रयत्वाद् गुह्यम् । यत्तु गुह्यम्, तत् प्रीतिविवर्धनमिति पूर्वमेव उक्तम् ।

**कठिनं त्वस्थि विद्धि हि ।।१५।।**

**मेदो वसां विजानीयात्**

अस्थि कठिनमित्युच्यते । यत्तु मेदः, तद् मेदयतीति कृत्वा वसा ।

**मज्जा पुष्टिकरः स्मृतः ।**

मज्जाख्यस्य धातुविशेषस्य पुष्टिहेतुत्वात्पुष्टिकर इति उक्तः ।

**विष्ठां विदूषिकां विद्धि**

विदूषयति विकृतां शारीरीं स्थितिं सम्पादयतीति कृत्वा ।

**मूत्रं स्राव इहोच्यते ।।१६।।**

स्रवणं स्रावः ॥१६॥

**कालेयकं तु कुसुमं**

कालेयकं कृष्णपद्मम् । तत् कुसुममिव कुसुममिति चमत्कृतिकारित्वेन देवतात्महेतुत्वात् ।

**धूमं धृतिकरं विदुः ।**

श्मशानोत्थितोऽत्र धूमो विवक्षितः । स च देवतानां प्रियत्वाद् धृतिकर इति उक्तः ।

**मेलकं चैव सङ्घातः**

देवतानां सम्बन्धि यद् मेलकं मेलनम्, तत् सङ्घात इति उच्यते । एतन्मेल-कोपदेशेन यो देवानाम्–

**पुत्रः सोद्द्योतकः स्मृतः ।।१७।।**

---

दशन खण्डक, उदर आधार (अशित को धारण करता है) है । हृदय भी गुह्य है । गुह्य प्रीति विवर्धन होता है । और यह हृदय गुह्य का आश्रय होने से गुह्य है । अस्थि को कठिन या कठिन को अस्थि कहते हैं ॥१५॥

मेद, वसा है, मजा पुष्टिकर है । विष्ठा विदूषिका है । मूत्र शरीर से जनित स्राव है ॥१६॥

उद्द्योतयति अज्ञाननिवारणेन जगदिति कृत्वा ॥१७॥

किञ्च–

**दुहिता ह्लादिका ज्ञेया**

ह्लादयति तत्त्वोपदेशेन जगदिति कृत्वा ।

**क्षुब्धं वै चलितं विदुः ।**

आरुरुक्षुः प्राथमिके योगाभ्यासे स्थित्यलाभात् क्षुब्धश्चलित इति उच्यते ।

**दूषको जार इत्युक्तः**

यः क्वचिदिज्यादौ दूषकः, स ज्यानिहेतुत्वाद् जार इति उक्तः ।

**पीतं वन्दितमेव च ॥१८॥**

**भक्षितं प्राप्तमित्याहुश्छर्दितं विकृतीकृतम् ।**

यद् रहस्यद्रव्यं किञ्चित्पीतम्, तद् वन्दितमुच्यते । एवमेव यत्किञ्चिद् भक्षितम्, तत् प्राप्तमित्याहुः । छर्दितं यत्किञ्चिन्नैवेद्यं संवादिभक्तितारतम्याद् बहु अशितं सत् प्रमादात् वान्तम्, तद् विकृतीकृतं वाच्यम् ।

इत्थम्–

**दूषितं कर्षितं ज्ञेयं**

यत्किञ्चिन्नलकादि दूषितम्, तत् कर्षितं ज्ञेयमाहृतचरमित्यर्थः ।

**सम्मतं समयं विदुः ॥१९॥**

पारमेशः समयोऽवश्यानुष्ठेयत्वात् सम्मतमिति उक्तः ॥१९॥

**महल्लो रक्षको ज्ञेयः**

यः पारमेशाचारस्य रक्षकः, स महल्ल उच्यते महदुत्तमं पारमेशपदं लातीति कृत्वा ।

---

कुसुम कालेयक, धूम धृतिकारी । श्मशानस्थ देवताओं को रुचिकर धूम ऐसा ही है । देवता सम्बन्धी मेलक संघात और ज्ञान से उद्योत करने वाला पुत्र सोद्योतक होता है ॥१७॥

दुहिता **'ह्लादिका'** होती है । क्षुब्ध को चलित कहते हैं । योगाभ्यास में पहले असफल पर क्षोभ को प्राप्त शिष्य चलित कहलाता है । दूषक जार होता है । रहस्य द्रव्य कुछ कुछ पीलेने वाला **वन्दित** कहलाता है ॥१८॥

भक्षित को प्राप्त और अधिक भोजन से वमन छर्दित कहलाता है । कर्षित दूषित होता है । समय को अवश्य अनुष्ठेय होने के कारण **सम्मत** कहते हैं ॥१९॥

परमेशाचार के रक्षक को **'महल्ल'** कहते हैं । महत् को लाने वाला ही महल्लक होता है ।

**छगलस्तु कनिष्ठकः ।**

यश्छगलः पशुः, स कनिष्ठक उच्यते । क्रमो ज्येष्ठनध्यमत्वात् ।

**विनयो देहकर्म स्यात्**

तद्धि विनीततां करोति ।

**साधनं तु जपः स्मृतः ।।२०।।**

साध्यतेऽनेन भुक्तिमुक्ती इति साधनम् ।

**होमितं सिद्धिजननं**

होमकर्मापन्नं हविर्यत्, तत् सिद्धिं त्रिविधां जनयतीति ।

तथा–

**विभागो रोचकः स्मृतः ।**

चरुकादेर्यो विभागो विभजनम्, स रोचकः रोचयति परां प्रीतिं जनयतीति कृत्वा ।

**कदम्बं वृन्दमित्याहुः**

देवतानां वीरद्रव्यादीनां यद् वृन्दं समूहः, तत् कदम्बं वदन्ति ।

**विरलोऽश्लिष्ट उच्यते ।।२१।।**

यो वीराचारात् पृथग्भूत इत्यर्थात् ।।२१।।

**विमलः शिष्य इत्युक्तः**

यः शिष्यः शासनीयः, स गुरुप्रसादाद् विगतमल इति कृत्वा विमलः ।

**इच्छा चाज्ञा प्रकीर्तिता ।**

---

छगल को **कनिष्ठक** कहते हैं । ज्येष्ठ मध्यम के बाद कनिष्ठ का क्रम आता है ।

देह कर्म को **विनय** कहते हैं क्योंकि विनीतता से देह कर्म सम्पन्न होता है ।

जप साधन है क्योंकि इसी से भुक्ति मुक्ति सिद्ध होती हैं ।।२०।।

होमित हवि सिद्धि को उत्पन्न करने के कारण **सिद्धिजनन** कहलाती है । चरुक आदि का विभाजन प्रीति जनन होने के कारण **'रोचक'** कहलाता है ।

देववृन्द अथवा वीर द्रव्यवृन्द **'कदम्ब'** होता है, वीराचार से पृथक् विरल **अक्लिष्ट** है ।।२१।।

**विमल** (निर्मलचित्त) शिष्य (शासनीय) गुरु की कृपा से ही होता है । गुरु आदि की आज्ञायें उनकी **इच्छा** हैं ।

गुर्वादीनां सम्बन्धिनी आज्ञा यत्र लब्धा, तत्र असौ तदीयानुग्राहिका इच्छा स्थितेति यावत् ।

**देवतादर्शनं यत्तत्**

किञ्चिदसामान्यमेतदित्थं विमृष्टमित्यर्थः ।

**लब्धं शस्त्रहतं विदुः ।।२२।।**

यः शस्त्रहतः पशुः, तं लब्धमिति आमनन्ति ॥२२॥

**निशाचरो बिडालः स्यात्**

निशायां चरो यस्य वीरस्य, स बिडाल उच्यते । बिडालो हि रात्रावाखूना-हरति, अयं तु वीरपशून् ।

**नखिनश्च विदारकाः ।**

ये वीरपशूनां विदारकाः, ते नखिन उच्यन्ते, विदारकत्वसाधर्म्यात् ।

**आनीतं सारितं ज्ञेयं**

महाचर्वादि यदानीतम्, तत् सामरस्येन सञ्ज्ञातमिति कृत्वा सारितमिति उच्यते ।

**रक्षितं पिहितं तथा ।।२३।।**

यद् रक्षितम्, तत् पिहितमिति वाच्यम् ।

अथ कदाचित् तीव्रशक्तिपातवशात् समासादिते मेलके तत्तत्तत्त्वसाक्षात्कार-मार्गं साधकेन्द्रस्य देव्यो दर्शयन्तीत्यादिशति अनुग्रहपरः परमेश्वरः–

**शिखां संस्पृशते या तु सा तु शक्तिं विनिर्दिशेत् ।**
**शिरः प्रदर्शयेद्या तु सा च बिन्दुं विनिर्दिशेत् ।।२४।।**

---

असामान्य दर्शन विमर्शन ही **देवता दर्शन** है । शरण से हत पशु को लब्ध कहते हैं ॥२२॥

निशा में जो वीर चले वह विडाल तथा वीर पशुओं का विदारक **नखी ।** आनीत महाचरु सामरस्य पूर्ण होने से **सारित** तथा रक्षित को **पिहित** कहते हैं ॥२३॥

तीव्रशक्तिपात के फलस्वरूप प्राप्त मेलक में देवियाँ साधकेन्द्र को भगवत्साक्षात्कार का मार्ग प्रशस्त करती हैं । इस तरह के अनुग्रह करने वाले मूलतः परमेश्वर ही हैं । इसी क्रम में देवियाँ यदि विविध अङ्गों-रूपों को दिखलाती हैं, तो उनका अर्थ साधक को समझना चाहिये । जैसे–

१–शिखा के स्पर्श से शक्ति को निर्दिष्ट करती है ।

**ललाटं दर्शयेद्या तु ईश्वरं सा विनिर्दिशेत् ।**
**तालुकं दर्शयेद्या तु तया रुद्रः प्रकीर्तितः ।।२५।।**
**जिह्वां प्रदर्शयेद्या तु विद्यां साथ विनिर्दिशेत् ।**
**सप्त कोट्यस्तु मन्त्राणां तस्या ज्ञेयास्तु सुव्रते ।।२६।।**
**घण्टिकां दर्शयेद्या तु तयानन्तः प्रदर्शितः ।**
**कण्ठं तु संस्पृशेद्या सा कालतत्त्वं विनिर्दिशेत् ।।२७।।**
**हृत्पद्मं दर्शयेद्या तु पुरुषं सा विनिर्दिशेत् ।**
**नाभिं प्रदर्शयेद्या तु प्रकृतिं सा विनिर्दिशेत् ।।२८।।**
**तस्याधस्ताद्बुद्धितत्त्वं यदि स्याद्दर्शनं प्रिये ।**

प्रशान्ताशेषतरङ्गशिवधामनि परमनिर्वाणरूपे न काचित्सिद्धिरस्तीति कृत्वा साधकेभ्यो मेलकावसरे वरदानोद्यता देव्यः सिद्धिमाधाराधिरूढाच्छक्तिस्थानात्प्रभृत्येव ददतीति तदुपक्रममेव निर्देशः कृतः । बिन्दुमिति अशेषवाच्यवाचकाविभागप्रकाशं सादाशिवं धाम । कीर्तित इति मया साक्षात्कृत इति दर्शितः । सप्त कोट्य इत्युक्तेः साधकस्य अस्याः सकाशात् तत्तन्मन्त्रसिद्धिलाभो भवतीति । तालुकं तालुरन्ध्रम् ।

---

२–शिरोभाग दर्शन से ईश्वर की ओर संकेत करती है ।

३–ललाट दर्शन से ईश्वर की ओर संकेत करती है ।

४–तालु से रुद्र को, ५–जिह्वा से शुद्धविद्या को प्रदर्शित करती है । इसमें सात करोड़ मन्त्रों का संज्ञान लेना चाहिये ।

६–घण्टिका अनन्त, ७–कण्ठ से काल तत्त्व, ८–हृत्पद्म से पुरुष, ९–नाभि से प्रकृति और १०–इससे नीचे बुद्धितत्त्व का निदेश मिलता है ।

शिव के शैव धाम की यह सबसे बड़ी विशेषता होती है कि, वहाँ संविद्विमर्श की ही तरङ्गें शेष रहती हैं । जगदुल्लासक तरङ्गें अशेष रूप से शान्त हो जाती हैं । वह पर निर्वाण की महनीय स्थिति होती है । उसमें अवस्थित भाग्यशाली ज्ञानाकल साधक को किसी सिद्धि की प्रकल्पना नहीं होती । सामान्यतः या जागतिक व्यामोह से ऊपर उठने वाले उन्मिष्ट साधक शक्तिपात से प्रवित्रित अवस्था में देवियों के दर्शन का सौभाग्य प्राप्त करते हैं ।

**ये देवियाँ भी उसके उत्कर्ष की साधिकायें मानी जाती हैं । ये विभिन्न** आधारों पर अधिरूढ होकर सिद्धियों का निर्देश करती हैं । इन्हीं के चिह्न वे अङ्ग होते हैं । जिन्हें ध्यान में या तो स्पर्श करती हैं या उनका दर्शन करा देती हैं । यह स्पर्श साधक शरीर में अनुभूत होता है और दर्शन देवी के अवयवों का होता है ।

घण्टिका तदधो लम्बमाना लम्बिकाख्या शक्तिः । अनन्त इति मायातत्वाधिष्ठाता । कालनियतिपुरुषतत्त्वैर्नवात्मप्रक्रियावत्कलाविद्यारागतत्त्वानि सङ्गृहीतानि दर्शितानि । यदि स्यादिति यदि तया साक्षात्कृतं भवेदित्यर्थः ।

किञ्च–

**यदा गुह्यं स्पृशेद्देवि**

तदा असौ–

**अहङ्कारोऽधिदैवतम् ।।२९।।**

साक्षात्कृतं सूचयतीत्यर्थः । अत्रैव च अन्तर्भूतस्येन्द्रियतन्मात्रषोडशकस्य दर्शनम्, न पृथक् ।

---

दोनों माध्यमों से साधक की स्तरीयता की सूचना मिलती है । यही उनका विनिर्देश मानना चाहिये । मुझे इसकी बहुशः सूचनायें अनुभूत होती रहती हैं । यद्यपि यह लिखने का विषय नहीं है पर स्वाध्यायशील साधकों को ध्यान में प्रकर्ष पूर्वक शास्त्र निर्दिष्ट समय पर बैठने से देवियों की कृपा की वर्षा स्वाभाविक रूप से होती है । यह अनुभूत सत्य है ।

बिन्दु का तात्पर्य (श्लोक २४) जहाँ अशेष वाच्यवाचक विभागों की समाप्ति के उपरान्त अविभाग प्रकाश होता है, वही बिन्दु स्थान है । इसे क्षेमराज सादाशिव धाम कहते हैं । वास्तव में नाद सादाशिव धाम होता है । बिन्दु ऐश्वर धाम है । किन्तु यहाँ ईश्वर के लिये ललाट का निर्देश है । साधक यह जानता है कि ललाट आज्ञा चक्र है । इसका ओंकार बीज पंचोङ्कारसमायुक्त होता है । यहाँ से शक्तिधाम के नीचे ब्रह्मा से लेकर सदाशिव तक के पाँचों ब्रह्म उल्लसित हैं । सादाशिव प्रकाश में नाद बिन्दु रुद्र विष्णु और ब्रह्मा सभी अन्तर्भूत हैं । इसी सन्दर्भ में सादाशिव धाम की बात मानी जा सकती है । कीर्त्तित से स्वयं के साक्षात्कार की स्वीकृति यहाँ सूच्य है ।

श्लोक २६ में सप्तकोटि मन्त्रों की चर्चा है । देवियों की कृपा से इनमें से कुछ मन्त्र भी मिल जाते हैं । तालुरन्ध्र के नीचे लम्बमाना लम्बिका ही घण्टिका (श्लोक २७) है । अनन्त मायातत्त्व के अधिष्ठाता हैं । कालतत्त्व से नवात्म दृष्टि से तत्त्वों की सभी शक्तियाँ संगृहीतव्य हैं ।

यदि गुह्य के स्पर्श की प्रतीति हो तो यह सूचना मिलती है कि, अधिदैवत अहङ्कार इन्द्रियों और तन्मात्राओं का साक्षात्कार हो गया है । इस सूचना से साधक को आत्मतोष होता है ॥२४-२९॥

किञ्च–

**कटिं सन्दर्शयेद्या तु व्योम तत्राधिदैवतम् ।**
**ऊरुकौ दर्शयेद्देवि पवनं सा विनिर्दिशेत् ।।३०।।**
**जानुनी दर्शयेद्या तु तया तेजः प्रकीर्तितम् ।**
**जङ्घे प्रदर्शयेद्या तु वरुणं सा विनिर्दिशेत् ।।३१।।**

एवं मेलकावसरे देवीभिश्छुम्मकायां दर्शितायां प्रतिछुम्मका यादृक् साधकेन दर्शयितव्या, तादृशीमाह–

**शरीरं दर्शयेद्देवि सर्वदेवमयं प्रिये ।**

तदा अस्य–

**पूजाग्निजपयुक्तस्य ध्यानयुक्तस्य मन्त्रिणः ।।३२।।**
**समयाचारयुक्तस्य कालांशकविदः प्रिये ।**
**क्रियोपेतस्य देवेशि योगिन्यस्तु वरप्रदाः ।।३३।।**
**दर्शयन्ति महाध्वानं नानाभोगसमन्वितम् ।**
**गिरिराजस्य देवेशि यं गत्वा फलमश्नुते ।।३४।।**

क्रिया प्रोक्तरूपा । दर्शयन्ति स्वदेहस्थमेव प्रत्यक्षीकारयन्ति । गिरिराजस्य साधकेन्द्रस्य । यं गत्वेति साक्षादनुभूय गमेर्ज्ञानार्थत्वात् । फलमश्नुत इति तत्तद्भोग-भुग्भवति ।।३४।।

---

कटि से व्योम और व्योमेश, उरुओं से वायु और पवनेश, जानुओं से तेज और इसके अधिदेव और जङ्घों से वरुण और वरुणेश का वह विनिवेश करती है ।।३०-३१।।

मेल के इस शुभावसर पर कृपाविधायिका देवी शरीर का दर्शन देकर यह सूचित करती हैं कि, साधकेन्द्र की सर्वदेवय सिद्धि का मार्ग प्रशस्त हो चुका है ।

पूजा, होमकर्म, जप और ध्यान में तन्मय मन्त्र–प्रयोक्ता को, समयाचार समन्वित कालांशकों के वेत्ता क्रियायोग विशेषज्ञ साधकेन्द्रों पर योगिनी शक्तियाँ विशेष अनुग्रह की वर्षा करती हैं और वरदान देने के लिये तत्पर रहती हैं । देती भी हैं ।।३२-३३।।

ये अनुग्रह कारिणी शक्तियाँ महाभोग समन्वित महामाहेश्वर के अध्वा का साक्षात्कार करा देती हैं । अपने साधकेन्द्र के देहभाव में प्रत्यक्ष करा देती हैं । गिरि (छुम्मक) पर्वत की तरह अप्रकम्प्य साधकेन्द्र धन्य हो जाता है और मंजिल को पाकर कृतकार्य हो जाता है ।।३४।।

किञ्च अस्य एता योग्यतातिशयात्–

**भैरवेण समाज्ञप्ताः शक्तयस्तु वरानने ।**

**अन्याश्च सिद्धीर्विविधा अधमा मध्यमोत्तमाः ।।३५।।**

**अन्यतन्त्रसमुत्थाश्च साधयन्ति न संशयः ।**

भैरवेण समाज्ञप्ता इत्यनेन परमेश्वर एव इत्थं साधकस्य अभीष्टदानाय उद्यच्छतीत्याह । न संशय इति निश्चितमेव एतदित्यर्थः ।

उपसंहरति–

**एवं संक्षेपतः प्रोक्तं मेलकं तु वरानने ।।३६।।**

**संतताभ्यासयोगेन**

योग्यतमता जाता । तस्मै–

**ददते चरुकं स्वकम् ।**

दद दाने इत्यस्य अयं प्रयोगः । स्वकं स्वात्मार्थं साधितमसामान्यमित्यर्थः ।

तदाह–

**यस्य संप्राशनाद्देवि वीरेशसदृशो भवेत् ।।३७।।**

संप्राशनमविकल्पमाहरणम् । वीरेशो भैरवनाथः ।

---

साधकेन्द्र की तीव्रशक्तिपात पवित्रित योग्यता के आतिशय्य से स्वयं भगवान् भैरव भट्टारक उन योगिनियों को आदेश देते हैं कि, हमारे इस महाभक्त को, प्रिय उपासक को, जैसी तुम लोग चाहो, उत्तम, मध्यम या अधम सिद्धियों को प्रदान कर कृतार्थ करो ॥३५॥

कृपामयी प्रसन्न योगिनी शक्तियाँ वात्सल्य पूर्वक अन्य तन्त्रों में समुत्थ सिद्धियों को भैरव परमेश्वर से आज्ञप्त होकर पूरा कर देती हैं । भगवान् कहते हैं कि, देवि इस तरह संक्षेप में मेलक रूप शक्तिपात सन्दर्भ में योगिनियों द्वारा तत्त्व साक्षात्कार का संक्षिप्त निरूपण मैंने किया है ॥३६॥

संतत् अभ्यास योग द्वारा वात्सलयी ये शक्तियाँ खाने के लिये भक्त को चरु भी प्रदान करती हैं । यह असामान्य अमृत पदार्थ ग्रहण कर मन्त्री धन्य हो जाता है । उसके संप्राशन से तीव्रशक्तिपात पवित्रित साधक स्वयं वीरेश बन जाता है । वीरेश स्वयं भैरवनाथ ही है । चरु के संप्राशन का ही यह सामर्थ्य है ॥३७॥

यत एवम्–

**तस्माद्ध्यानार्चने होमं जपं च वरवर्णिनि ।**

**कुर्वन्ति भावितात्मानस्ततः सिद्ध्यन्ति मन्त्रिणः ।।३८।।**

भावितात्मत्वं सुदृढ आश्वासः ॥३८॥

......................................धुरन्धुरा ।
सम्पूर्णसिद्धीर्विदधत्स्वच्छन्दो जयति प्रभुः ॥
सर्वत्रैव स्फुरति सततं सर्वसर्वात्ममूर्ति-
योंऽसौ स्वच्छोच्छलितललितो बोधसिन्धुः समन्तात् ।
स्वच्छन्दोऽयं जयति भगवान्सर्वसम्पन्निधान-
स्फीतस्फूर्जन्निरुपमसुधास्फारसारस्वशक्तिः ॥

**।। इति श्रीस्वच्छन्दोद्द्योते छुम्मकाप्रकाशः**
**पञ्चदशः पटलः ।।१५।।**

---

इसीलिये ध्यान में, हवन में और जप में निष्ठापूर्वक परायण मन्त्री भावितात्मा महात्मा की तरह लगे रहते हैं और भैरवीय अनुग्रह से अनुगृहीत हो जाते हैं । परिणामतः सारी सिद्धियाँ उनके लिये हस्तामलक की तरह अनायास उपलब्ध हो जाती हैं ॥३८॥

विश्वोल्लास विलासमय धवल धुरन्धर धर्म्य !
सर्व सिद्धिदायक विभु जय स्वच्छन्द अगम्य ।
स्फुरित सतत सर्वत्र शिव जयसर्वात्मक सत्य ।
स्वच्छ उच्छलित ललित नित बोधसिन्धु आदित्य ॥
जै स्वच्छन्दविधान जय जय सम्पत्ति निधान ।
स्फूर्जित परम स्फीत जय, सुधा धन्य भगवान् ॥

*स्वातन्त्र्यसमुद्भासित विश्वमूर्त्ति भैरव भट्टारक प्रवर्त्तित-*
*महामाहेश्वराचार्य क्षेमराजकृतोद्योत-विवरणोपेत*
*डॉ० परमहंसमिश्र कृत नीर-क्षीर-विवेक भाषाभाष्य संवलित*
*श्रीस्वच्छन्दतन्त्र का*
*छुम्मकाप्रकाश नामक प्रन्द्रहवाँ पटल परिपूर्ण*
*समाप्तोऽयं ग्रन्थः*
*शुभं भूयात्*

नाम्नैव भेददृष्टिर्विधुता येनास्वतन्त्रतातत्त्वा ।
श्रीमत्स्वतन्त्रतन्त्रं भेदव्याख्यां न तत्सहते ॥१॥
भेददर्शनसंस्कारतन्तुसन्ततमादितः ।
स्वच्छस्वच्छन्दचित्स्वात्मसतत्त्वं नेक्षते जनः ॥२॥
गतानुगतिकप्रोक्तभेदव्याख्यातमोऽपनुत् ।
तेनाद्वैतामृतस्फीतः स्वच्छन्दोद्द्योत उम्भितः ॥३॥
श्रीब्रह्मदेवादिगुरुक्रमाद्यः
श्रुत्वा चिरं व्याकृतवान्स्वतन्त्रम् ।
श्रीमान्प्रयागो गुरवस्तथान्ये
तेऽभ्यर्थनायां पुनरप्रवृत्तौ ॥४॥
निस्सीमजन्ममरणादिव संप्ररूढ-
भेदाधिवासितमना न यदभ्यमंस्त ।
...........................
...................................॥५॥
श्रीभैरवीयपरमाद्वयशक्तिपात-
पूताः सदैव गुरवो गलितापरेच्छाः ।
स्वच्छस्वतन्त्रमतिसुन्दरमात्मतत्त्वं
सम्प्राप्नुवन्तु सह दीक्ष्यजनैरजस्रम् ॥६॥

---

उद्योतकार के आत्म निवेदन का भावार्थ–
अद्वय अभेदता में सांसारिक संस्कार
विगलित, चिदग्निसात् मेरे आराध्यदेव !
भेदकर अन्धतम द्वैत संभावना को
उद्यत अद्वैत दृष्टि मेरे आराध्य देव !
परा-प्रवर्त्तित तान्त्रिक परम्परा पढ
लिखा मैंने 'उद्योत' यह मेरे आराध्य देव !
गुरुजन अनुग्रह से संसृति समाप्त यह
तुझमें हूँ शाश्वत अब मेरे आराध्य देव !
---------------------------------।
---------------------------------॥१-६॥

पूर्णानुभवसद्युक्तिः सदाचारपरम्परा ।
विश्रान्ता यत्र यस्मिंश्च कार्तार्थ्यं गुरवोऽप्यगुः ॥७॥
तत्त्वोपदेशाद्यो विद्यासुधाम्भोधिसुधाकरः ।
यत्कृतैः शास्त्रसद्वृत्तिमण्डनैर्मण्डितं जगत् ॥८॥
अकस्मात्सर्वशास्त्रार्थज्ञत्वाद्यं लक्ष्मपञ्चकम् ।
यस्मिञ्छ्रीपूर्वशास्त्रोक्तमदृश्यत जनैः स्फुटम् ॥९॥
हेलावलोकनादेव जन्तून्योऽमोचयत्क्षणात् ।
श्रीमतोऽभिनवाच्छास्त्रमागमय्य गुरोरिदम् ॥१०॥
व्यावृणोत्क्षेमराजस्तत्पादधूलिपवित्रितः ।

---

शैव शक्तिपात पूत इन्द्रियजित् स्वच्छन्द,
तन्त्र की परम्परा का ज्ञाता गुरुदेव वर्ग
आत्मतत्त्व–साक्षात्कार–साधक श्रद्धेय यह,
दीक्ष्यों को दीक्षाफलदाता गुरु देववर्ग
सद्युक्ति सदाचार अनुभव परम्परारत
तृप्त कृतकृत्य सर्वज्ञ गुरुदेववर्ग
तत्त्वोपदेश–पीयूष सागर–सुधाकर यह
इससे विमण्डित विश्व गौरव गुरुदेववर्ग ॥७-८॥

\+ \+ \+ \+ \+ \+ \+ \+

गुरु की कृपा से ही आती अद्वैत दृष्टि
अकस्मात् होता सर्वशास्त्रार्थ तत्त्वज्ञान ।
क्षण में ही जीववन्त बनाया शिव शाश्वततत्त्व
परम सौभाग्य मेरे गुरु का ही अवदान ।
मेरे भगवान् आर्य अभिनव की पदधूलि
ने ही बनाया मुझे क्षेमराज अनूचान ।
व्याख्या स्वच्छन्दतन्त्र की है यह जो कुछ भी
उनका ही चिद्घनचैतन्य मय वरदान ॥९-१०॥
भीषा गली भवकी, मनीषा के मल गले,
गले अभिशाप सब पसरा मन चित्प्रकाश ।
भैरव-सद्भाव भव्य संस्तुति का रसास्वाद
लेता लब्धोदय मैं निर्यन्त्रण चिद्विलास ।

ग्रस्तोऽयं सकलो भवो विगलिता: कर्माणुमायामला:
प्राप्तानन्दघना स्थिति: किमपरं लब्ध: प्रकाश: पर: ।
श्रीमच्चेतनभैरवस्तुतिरसास्वादेन लब्धोदयै-
रस्माभिर्विमले हृदम्बरतले निर्यन्त्रणं स्थीयते ॥११॥
स्वतन्त्र: स्वच्छात्मा स्फुरति सततं चेतनशिव:
परा शक्तिश्चेयं करणसरणिप्रान्तमुदिता ।
तदाभोगैकात्म प्रसरति समस्तं जगदिदं
न जाने कुत्रायं ध्वनिरनुपतेत्संसृतिरिति ॥१२॥

**।। श्रीमन्महामाहेश्वराचार्यविपश्चिच्चक्रवर्तिश्रीमदभिनवगुप्तपाद-पद्मोपजीविश्रीमत्क्षेमराजविरचित: श्रीस्वच्छन्दोद्द्योत: सम्पूर्ण इति शिवम् ।।**

---

पराशक्ति उल्लसित मेरे अस्तित्व में ही
चिन्मय हूँ चेतना में संचित चिदाकाश ।
मचा शिवशक्ति तत्त्व–काया कैलाश पर
समना त्रिशूलाब्ज पर नित उन्मना का महारास ॥११-१२॥

श्रीमन्महामाहेश्वराचार्य विपश्चिच्चक्रवर्त्ति श्रीमदभिनवगुप्त
पादपद्मोपजीविश्रीमत्क्षेमराज विरचित अन्तिम निवेदन
रूप पद्यों का भावानुवाद परिपूर्ण ।

भाष्यकार का आत्मनिवेदन–

भावात् प्रणम्य श्रीमदभिनवपरमेष्ठिनम् ।
परमं जयरथं देवं लक्ष्मणं दीक्षकं गुरुम् ॥१॥
आचार्यं क्षेमराजं च स्वच्छन्दोद्योत-भास्करम् ।
नीर-क्षीर-विवेकाख्यं भाषा-भाष्यं मनोहरम् ॥२॥
पूरयत्यधुना हंस: पञ्चभागमयं शुभम् ।
स्वात्मानं भैरवं देवं स्मारं स्मारं सनातनम् ॥३॥
हृदयांश: पराकाल्या: हंस: सूर्यमणि-प्रिय: ।
नौति नित्यं परामम्बां सिद्धं स्वात्ममहेश्वरम् ॥४॥

शुभं भूयात्

# मूलश्लोकादिपङ्क्तिक्रमः

## एकादशः पटलः

## मूलश्लोकादिक्रमः द्वादशः पटलः

## मूलश्लोकादिक्रमः त्रयोदशः पटलः

## मूलश्लोकादिक्रमः चतुर्दशः पटलः

## मूलश्लोकादिक्रमः पञ्चदशः पटलः

# उद्धरणादिक्रमः

## एकादशः पटलः

# विशिष्टशब्दादिक्रमः

# शास्त्रशास्त्रकारादिक्रमः

# सूक्तयः

# अशुद्धिशुद्धिक्रमः

| | | |
|---|---|---|
| १–अतिमार्ण | अतिमार्ग | ९१ |
| २–एकादशमः | एकादशः | १ |
| ३–कर्म्वेन्द्रियाँ | कर्मेन्द्रियाँ | ७६ |
| ४–चोधो | चाधो | २४१ |
| ५–दानादि | हानादि | १३८ |
| ६–वर्जित | वर्जितः | १३७ |
| ७–शतशास्त्र | शतशाख | २४३ |
| ८–शान्तयतीता | शान्त्यतीता | ३२ |
| ९–सर्वोषां | सर्वेषां | १३६ |
| १०–स्फरम् | स्फारम् | २४४ |
| ११–संखो | संख्यो | १३४ |